* श्रीगणेशाय नमः *

॥ ॐ नमो बृहस्पतये । नमस्तस्मै ब्रह्मणे । विष्णवे नमः ॥

## अथ स्कन्दपुराणस्थमाहेश्वरखण्डे

# द्वितीयं कौमारिकाखण्डम्

—*::*—

## प्रथमोऽध्यायः

मुनीनामुग्रश्रवसा सम्वादे पञ्चतीर्थविषये प्रश्नस्तत्र पार्थद्वारा पञ्चाप्सरःसमुद्धारवर्णनम्

श्रीमुनय ऊचुः

दक्षिणार्णवतीरेषु यानितीर्थानिपञ्च च । तानिब्रूहिविशालाक्षवर्णयंत्यतितानिच

सर्वतीर्थफलं येषु नारदाद्या वदन्ति च ।
तेषां चरितमाहात्म्यं श्रोतुमिच्छामहे वयम् ॥ २ ॥

उग्रश्रवा उवाच

शृणुध्वमत्यद्भुतपुण्यसत्कथं कुमारनाथस्य महाप्रभावम् ।
द्वैपायनो यन्मम चाह पूर्वं हर्षाम्बुरोमोद्गमचर्चिताङ्गः ॥ ३ ॥

कुमारगीता गाथाऽत्र श्रूयतां मुनिसत्तमाः ।
या सर्वदेवैर्मुनिभिः पितृभिश्च प्रपूजिता ॥ ४ ॥

मध्वाचारस्तम्भतीर्थंयोनिषेवेतमानवः । नियतंतस्यवासःस्याद्ब्रह्मलोकेयथामम

ब्रह्मलोकाद् विष्णुलोकस्तस्मादपि शिवस्य च ।
पुत्रप्रियत्वात्तस्यापि गुहलोको महत्तमः ॥ ६ ॥
अत्राऽऽश्चर्यकथा या च फाल्गुनस्य पुरेरिता ।
नारदेन मुनिश्रेष्ठास्तां वो वक्ष्यामि विस्तरात् ॥ ७ ॥
पुरा निमित्ते कस्मिंश्चित्किरीटी मणिकूटतः ।
समुद्रे दक्षिणेऽभ्यागात्स्नातुं तीर्थानि पञ्च च ॥ ८ ॥
वर्जयन्तिसदायानिभयात्तीर्थानितापसाः ।कुमारेशस्यपूर्वंचतीर्थमस्तिमुनेःप्रियम्
स्तम्भेशस्य द्वितीयं च सौभद्रस्य मुनेः प्रियम् ।
बर्करेश्वरमन्यच्च पौलोमीप्रियमुत्तमम् ॥ १० ॥
चतुर्थं च महाकालं करंधमनृपप्रियम् । भरद्वाजस्य तीर्थं च सिद्धेशाख्यंहिपंचमम्
एतानि पञ्चतीर्थानि ददर्श कुरुपुङ्गवः । तपस्विभिर्वर्जितानिमहापुण्यानितानिच
दृष्ट्वा पार्श्वे नारदीयानपृच्छत महामुनीन् ।
तीर्थानि यानि रम्याणि प्रभावाद्भुतवन्ति च ॥
किमर्थं ब्रूत वर्ज्यंते सदैव ब्रह्मवादिभिः ॥

तापसा ऊचुः

ग्राहाः पञ्च वसन्त्येषु हरन्ति च तपोधनान् ॥ १४ ॥
अत एतानि वर्ज्यन्ते तीर्थानि कुरुनन्दन !। इति श्रुत्वा महाबाहुर्गमनायमनो दधे
ततस्तं तापसाः प्रोचुर्गंतुं नार्हसि फाल्गुन !।
बहवो भक्षिता ग्राहै राजानो मुनयस्तथा ॥ १६ ॥
तत्त्वं द्वादश वर्षाणि तीर्थानामबुदेष्वपि ।
स्नातः किमेतैस्तीर्थैस्ते मा पतङ्गव्रतोभव ॥ १७ ॥

अर्जुन उवाच

यदुक्तं करुणासारैः सारं किं तदिहोच्यताम् ।
धर्मार्थी मनुजो यश्च न स वार्यो महात्मभिः ॥ १८ ॥



धर्मकामं हि मनुजं यो वारयति मन्दधीः ।
तदाश्रितस्य जगतो निःश्वासैर्भस्मसाद् भवेत् ॥ १९ ॥
यज्जीवितं चाचिरांशुसमानक्षणभंगुरम् । तच्चेद्धर्मकृतेयातियातुदोषोऽस्तिकोननु
जीवितं च धनं दाराःपुत्राःक्षेत्रगृहाणि च । यान्तियेषां धर्मकृतेतएवभुविमानवाः

तापसा ऊचुः

एवं ते ब्रुवतः पार्थ दीर्घमायुः प्रवर्धताम् ।
सदा धर्मे रतिर्भूयाद्याहि स्वं कुरु वाञ्छितम् ॥ २२ ॥
एवमुक्तः प्रणम्यैतानाशीर्भिरभिसंस्तुतः । जगामतानि तीर्थानि द्रष्टुंभरतसत्तमः
ततः सौभद्रमासाद्य महर्षेस्तीर्थमुत्तमम् । विगाह्य तरसावीरः स्नानं चक्रे परन्तपः
अथ तं पुरुषव्याघ्रमन्तर्जलचरो महान् । निजग्राह जले ग्राहः कुन्तीपुत्रं धनञ्जयम्
तमादायैव कौन्तेयो विस्फुरन्तं जलेचरम् । उदतिष्ठन्महाबाहुर्बलेन बलिनाम्वरः
उद्धृतश्चैव तु ग्राहः सोऽर्जुनेनयशस्विना । बभूवनारीकल्याणीसर्वाभरणभूषिता
दीप्यमानशिखा विप्रा दिव्यरूपा मनोरमा । तदद्भुतं महद्दृष्ट्वा कुन्तीपुत्रोधनञ्जयः
तां स्त्रियं परमप्रीत इदं वचनमब्रवीत् ।
का वै त्वमसि कल्याणि! कुतो वा जलचारिणी ॥
किमर्थं च महत्पापमिदं कृतवती ह्यसि ॥

नार्युवाच

अप्सरा ह्यस्मि कौन्तेय! देवारण्यनिवासिनी ॥ ३० ॥
इष्टा धनपतेर्नित्यं वर्चानाम महाबल !।
मम सख्यश्चतस्रोऽन्याः सर्वाः कामगामाः शुभाः ॥ ३१ ॥
ताभिः सार्धं प्रयाताऽस्मि देवराजनिवेशनात् ।
ततः पश्यामहे सर्वा ब्राह्मणं चाऽनिकेतनम् ॥ ३२ ॥
रूपवन्तमधीयानमेकमेकांतचारिणम् । तस्य वै तपसा वीर तद्वनं तेजसमावृतम्
आदित्य इव तं देशं कृत्स्नमेवान्वभासयत् । तस्यदृष्ट्वातपस्ताद्दृग्रूपंचाद्भुतदर्शनम् ॥

अवतीर्णाऽस्मि तं देशं तपोविघ्नचिकीर्षया ।
अहं च सौरभेयी च सामेयी बुद्बुदालता ॥ ३५ ॥
यौगपद्येन तं विप्रमभ्यगच्छाम भारत !।
गायन्त्यो ललमानाश्च लोभयन्त्यश्च तं द्विजम् ॥ ३६ ॥
स च नास्मासु कृतवान्मनो वीरः कथञ्चन ।
नाकम्पत महातेजाः स्थितस्तपसि निर्मले ॥ ३७ ॥

सोऽशपत्कुपितोऽस्मासु ब्राह्मणःक्षत्रियर्षभ ।ग्राहभूताजले यूयंभविष्यथशतंसमाः
ततो वयं प्रव्यथिताः सर्वा भरतसत्तम । आयातः शरणं विप्रं तपोधनमकल्मषम्
रूपेण वयसा चैव कन्दर्पेण च दर्पिताः । अयुक्तं कृतवत्यःस्म क्षन्तुमर्हसि नो द्विज

एष एव वधोऽस्माकं स पर्याप्तस्तपोधन !।
यद्वयं शंसितात्मानं प्रलोब्धुं त्वामुपागताः ॥ ४१ ॥
अवध्याश्च स्त्रियः सृष्टा मन्यन्ते धर्मचिन्तकाः ।
तस्माद् धर्मेण धर्मज्ञ एष वादो मनीषिणाम् ॥ ४२ ॥
शरणं च प्रपन्नानां शिष्टाः कुर्वन्ति पालनम् ।
शरण्यं त्वां प्रपन्नाः स्मस्तस्मात्त्वंक्षन्तुमर्हसि ॥ ४३ ॥

एवमुक्तस्तु धर्मात्मा ब्राह्मणः शुभकर्मकृत् । प्रसादं कृतवाञ्छूर रविसोमसमप्रभः

ब्राह्मण उवाच

भवतीनां चरित्रेण परिमुह्यामिचेतसि । अहो धाष्ट्र्यमहोमोहो यत्पापायप्रवर्तनम्

मस्तकस्थायिनं मृत्युं यदि पश्येदयं जनः ।
आहारोऽपि न रोचेत किमुताकार्यकारिता ॥ ४६ ॥
अहो मानुष्यकं जन्म सर्वजन्म ( रत्न ) सुदुर्लभम् ।
तृणवत् क्रियते कैश्चिद्योषिन् मूढैर्दुराधरैः ॥ ४७ ॥
तान्वयं समपृच्छामो जनिर्वः किं निमित्ततः ।
को वा लाभो विचार्यैतन् मनसा सह प्रोच्यताम् ॥ ४८ ॥



न चैताः परिनिन्दामो जनिर्याभ्यः प्रवर्तते ।
केवलं तन्वि! निन्दामो ये च तासु निरर्गलाः ॥ ४६ ॥

यतःपद्मभुवा सृष्टंमिथुनं विश्ववृद्धये । तत्तथा परिपाल्यं वै नात्रदोषोऽस्ति कश्चन

या बान्धवैः प्रदत्ता स्याद्वह्निद्विजसमागमे ।
गार्हस्थ्यपालनं धन्यं तया साकं हि सर्वदम् ॥ ५१ ॥
यथा प्रकृतिपु योगो यत्नेनाऽपि परस्परम् ।
साध्यमानो गुणाय स्यादगुणायाप्यसाधितः ॥ ५३ ॥

एवंयत्नात्साध्यमानंस्वकंगार्हस्थ्यमुत्तमम् ।गुणायमहतेभूयादगुणायाप्यसाधितम्
पुरे पंचमुखे द्वाःस्थ एकादशभटैर्युतः । साकंनार्या बह्वपत्यः स कथं स्यादचेतनः
यश्चस्त्रियासमायोगःपंचयज्ञादिकर्मभिः । विश्वोपकृतयेसृष्टामूढैर्हासाध्यतेऽन्यथा

अहो शृणुध्वं नो चेद्वः शुश्रूषा जायते शुभा ।
तथापि बाहुमुद्धृत्य रोरूयामः शृणोति कः ॥ ५६ ॥

षड्धातुसारंतद्वीर्यं समानं परिहाय च । विनिक्षेपे कुयोनौतु तस्येदंप्रोक्तवान्यमः

प्रथमं चौषधीद्रोग्धा आत्मद्रोग्धा ततः पुनः ।
पितृद्रोग्धा विश्वद्रोग्धा यात्यन्धं शाश्वतीः समाः ॥ ५८ ॥
मनुष्यं पितरो देवा मुनयो मानवास्तथा ।
भूतानि चोपजीवन्ति तदर्थं नियतो भवेत् ॥ ५६ ॥

वचसा मनसा चैव जिह्वयाकरश्रोत्रकैः । दान्तमाहुर्हिसत्तीर्थं काकतीर्थमतःपरम्

काकप्राये नरे यस्मिन् रमन्ते तामसा जनाः ।
हंसोऽयमितिदेवानां कोऽर्थस्तेन विचिन्त्यताम् ॥ ६१ ॥

एवं विधं हि विश्वस्यनिर्माणंस्मरतोहृदि । अपिकृतेत्रिलोक्याश्चकथंपापेरमेन्मनः
तदिदं चान्यमर्त्यानां शास्त्रदृष्टमहो स्त्रियः । यमलोकेमयादृष्टंमुह्य प्रत्यक्षतःकथम्
भवतीषु च कः कोपो येयदर्थं हिनिर्मिताः । ते तमर्थंप्रकुर्वंति सत्यमस्तुचमेबलम्
कृत्स्नंसमस्तंविश्वं च सर्वमक्षयवाचकाः । परिमाणं शतं त्वेवनैतदक्षय्यवाचकम्

यदा च वो ग्राहभूता गृह्णतीः पुरुषाञ्जले । उत्कर्षतिजलात्कश्चित्स्थले पुरुषसत्तमः
तदा यूयं पुनः सर्वाः स्वं रूपं प्रतिपत्स्यथ । अनृतं नोक्तपूर्वं मे हसताऽपिकदाचन
कल्याणस्य सुपृक्तस्य शुद्धिस्तद्द्वरा हि वः ॥ ६७ ॥

नार्युवाच

ततोऽभिवाद्य तं विप्रं कृत्वा चैव प्रदक्षिणम् ॥ ६८ ॥
अचिन्तयामोपसृत्य तस्माद्देशात् सुदुःखिताः ।
क नु नाम वयं सर्वाः कालेनाल्पेन तं नरम् ॥ ६९ ॥

समागच्छेम यो नः स्वं रूपमापादयेत्पुनः । तावयं चिन्तयित्वेह मुहूर्तादिवभारत
दृष्टवत्यो महाभागं देवर्षिमथ नारदम् । सर्वा हृष्टाः स्म तं दृष्ट्वादेवर्षिममितद्युतिम्
अभिवाद्य च तं पार्थ स्थिताःस्मो व्यथिताननाः ।
स नोऽपृच्छद्द दुःखमूलमुक्तवत्यो वयं च तम् ॥ ७२ ॥

श्रुत्वा तच्च यथातत्त्वमिदं वचनमब्रवीत् । दक्षिणे सागरेऽनूपे पञ्चतीर्थानिसंतिवै
पुण्यानि रमणीयानि तानि गच्छत मा चिरम् ।
तत्रस्थाः पुरुषव्याघ्रः पाण्डवो वो धनञ्जयः ॥ ७४ ॥
मोक्षयिष्यति शुद्धात्मा दुःखादस्मान्न संशयः ।
तस्य सर्वा वयं वीर! श्रुत्वा वाक्यमिहागताः ॥ ७५ ॥
त्वमिदं सत्य वचनं कर्तुमर्हसि पाण्डव !।
त्वद्विधानां हि साधूनां जन्म दीनोद्धारकम् ॥ ७६ ॥
श्रुत्वेति वचनं तस्याः सस्नौ तीर्थेष्वनुक्रमात् ।
ग्राहभूताश्चोज्जहार यथा पूर्वाः स पाण्डवः ॥ ७७ ॥

ततः प्रणम्यतावीरंप्रोच्यमानाजयाशिषः । गन्तुंकृताभिलाषाश्चप्राहपार्थोधनञ्जयः
एष मे हृदि संदेहः सुदृढः परिवर्तते । कस्माद्वो नारदमुनिरनुजज्ञे प्रवासितुम् ॥
सर्वः कोऽप्यतिहीनोऽपि स्वपूज्यस्याऽर्थसाधकः ।
स्वपूज्यतीर्थेष्वावासं प्रोक्तवान्नारदः कथम् ॥ ८० ॥



तथैवनवदुर्गासुसतीष्वतिबलासुच । सिद्धेशेसिद्धगणपेचापिवोऽत्रस्थितिःकथम्
एकैक एषां शक्तो हि अपि देवान्न वारितुम् ।
तीर्थसंरोधकारिण्यः सर्वानावारयत्कथम् ॥ ८२ ॥

इति चिन्तयते मह्यं भृशं दोलायते मनः । महन्मे कौतुकं जातं सत्यं वा वक्तुमर्हथ

अप्सरा ऊचुः

योग्यं पृच्छसि कौन्तेय पुनः पश्योत्तरां दिशम् ॥ ८४ ॥
एषस्वविप्रैरभिसंवृतोऽचर्यो मुनिः समायाति तथेति नारदः ।
सर्वं हि पृष्टं तव वै स वक्ता प्रोच्यैवमाकाशतलं गतास्ताः ॥ ८५ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमेमाहेश्वरखण्डे
कौमारिकाखण्डे पार्थेन पञ्चाप्सरः समुद्धरणंनाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः

### नारदद्वाराऽर्जुनायतीर्थप्रशंसनं तत्र च सत्यतपःशौचसांख्ययोगादिषु धर्मेण सह दानस्य प्रशंसा

सूत उवाच

ततो द्विजैः परिवृतं नारदं देवपूजितम् । अभिगम्योपजग्राह सर्वानथ स पाण्डवः
ततस्तं नारदः प्राह जयारातीन्धनञ्जय ! । धर्मे भवतु ते बुद्धिर्देवेषु ब्राह्मणेषु च
कच्चिदेतां महायात्रां वीर! द्वादशवार्षिकीम् ।
आचरन्खिद्यसे नैवमथ वा कुप्यसे न च ॥ ३ ॥
मुनीनामपि चेतांसि तीर्थयात्रासु पाण्डव !।
खिद्यन्ति परिकुप्यन्ति श्रेयसां विघ्नमूलतः ॥ ४ ॥
कच्चिन्नैतेन दोषेण समाश्लिष्टोऽसि पाण्डव !।

अत्र चांगिरसा गीतां गाथामेतां हि शुश्रुम ॥ ५ ॥
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
निर्विकाराः क्रियाः सर्वाः स तीर्थफलमश्नुते ॥ ६ ॥
तदिदं हृदिधार्यन्तेकिंवात्वंतातमन्यसे । भ्रातायुधिष्ठिरोयस्यसखायस्यसकेशवः
पुनरेतत् समुचितं यद्विप्रैः शिक्षणं नृणाम् ।
वयं हि धर्मगुरवः स्थापितास्तेन विष्णुना ॥ ८ ॥
विष्णुना चाऽत्र शृणुमो गीतां गाथां द्विजान्प्रति ॥ ९ ॥
यस्यामलामृतयशःश्रवणावगाहः सद्यः पुनाति जगदाश्वपचाद्विकुण्ठः
सोऽहं भवद्भिरुपलब्धसुतीर्थकीर्तिश्छिन्द्यांसुबाहुमपिवःप्रतिकूलवृत्तिम्
प्रियं च पार्थतेब्रूमोयेषांकुशलकामुकः । सर्वेकुशलिनस्ते च यादवाःपांडवास्तथा
अधुना भीमसेनेन कुरूणामुपतापकः । शासनाद्धृतराष्ट्रस्य वीरवर्मा नृपोहतः
स हि राज्ञामजेयोऽभूद्यथापूर्वं बलिर्बली । कण्टकं कण्टकेनैव धृतराष्ट्रोजिगायतम्
इत्यादिनारदप्रोक्तां वाचमाकर्ण्य फाल्गुनः । अतीवमुदितः प्राहतेषामकुशलंकुतः
येब्राह्मणमतेनित्यंये च ब्राह्मणपूजकाः । अहं च शक्त्यानियतस्तीर्थानिविचरन्ननु
आगतस्तीर्थमेतद्धि प्रमोदोऽतीव मे हृदि ।
तीर्थानां दर्शनं धन्यमवगाहस्ततोऽधिकः ॥ १७ ॥
माहात्म्यश्रवणं तस्मादौर्वोऽपि मुनिरब्रवीत् ।
तदहं श्रोतु मिच्छामि तीर्थस्यास्य गुणान्मुने !॥ १८ ॥
एतेनैव श्राव्यमेतद्यस्त्वयांगीकृतं मुने !।
त्वं हि त्रिलोकीं विचरन्वेत्सि सर्वां हि सारताम् ॥
तदेतत्सर्वतीर्थेभ्योऽधिकं मन्ये त्वदाहृतम् ॥ १९ ॥

नारद उवाच

उचितं तव पार्थैतद्यत्पृच्छसिगुणिन्गुणान् ।
गुणिनामेवयुज्यन्ते श्रोतुं धर्मोद्भवा गुणाः ॥



साधूनां धर्मश्रवणैः कीर्तनैर्याति चान्वहम् ॥ २० ॥
पापानामसदालापैरायुर्याति यथान्वहम् ।
तदहं कीर्तयिष्यामि तीर्थस्याऽस्यगुणान्बहून् ॥ २१ ॥
यथा श्रुत्वा विजानासि युक्तमङ्गीकृतं मया ।
पुराऽहं विचरन्पार्थ त्रिलोकीं कपिलानुगः ॥ २२ ॥
गतवान्ब्रह्मणो लोकं तत्राऽपश्यं पितामहम् ।
स हि राजर्षिदेवर्षिमूर्तामूर्तैः सुसम्वृतः ॥ २३ ॥
विभाति विमलो ब्रह्मा नक्षत्रैरुडुराडिव । तमहंप्रणिपत्याऽथ चक्षुषाकृतस्वागतः
उपविष्टः प्रमुदितः कपिलेन सहैव च । एतस्मिन्नन्तरे तत्र वार्तिकाः समुपागताः
प्रहीयन्ते हि ते नित्यं जगद्द्रष्टुं हि ब्रह्मणा ।
कृतप्रणामानथ तान्समासीनान्पितामहः ॥ २६ ॥
चक्षुषामृतकल्पेन प्लावयन्निव चाब्रवीत् । कुत्रकुत्रविचीर्णं वोदृष्टंश्रुतमथापिवा
किञ्चिद्देवाद्भुतं ब्रूत श्रवणाद्येन पुण्यता । एवमुक्ते भगवता तेषां यः प्रवरो मतः
सुश्रवानाम ब्रह्माणंप्रणिपत्येदमूचिवान् । प्रभोरग्रे च विज्ञप्तिर्यथादीपोरवेस्तथा
तथापि खलु वाच्यं मे परार्थं प्रेरितेन ते ।
मुनिः कात्यायनो नाम श्रुत्वाधर्मान्पुनर्बहून् ॥ ३० ॥
सारजिज्ञासया तस्थावेकाङ्गुष्ठः शतंसमाः ।
ततःप्रोवाच तं दिव्यावाणी कात्यायन! शृणु ॥ ३१ ॥
पुण्येसरस्वतीतीरेपृच्छसारस्वतंमुनिम् । सतेसारंधर्मसाध्यंधर्मज्ञोऽभिवदिष्यति
इतिश्रुत्वामुनिवरोमुनिश्रेष्ठमुपेत्य तम् । प्रणम्यशिरसाभूमौपप्रच्छेदं हृदिस्थितम्
सत्यं केचित्प्रशंसन्तिततपःशौचं तथापरे । सांख्यंकेचित्प्रशंसन्ति योगमन्ये प्रचक्षते
क्षमां केचित्प्रशंसन्ति तथैव भृशमार्ज्जवम् ।
केचिन्मौनं प्रशंसन्ति केचिदाहुः परं श्रुतम् ॥ ३५ ॥
सम्यग्ज्ञानं प्रशंसन्ति केचिद्वैराग्यमुत्तमम् ।

अग्निष्टोमादिकर्माणि तथा केचित्परं विदुः ॥ ३६ ॥
आत्मज्ञानं परं केचित्समलोष्टाश्मकाञ्चनम् ।
इत्थं व्यवस्थिते लोके कृत्याकृत्यविधौ जनाः ॥ ३७ ॥
व्यामोहमेव गच्छन्ति किं श्रेयइतिवादिनः ।
यदेतेषु परं कृत्यमनुष्ठेयं महात्मभिः ॥ ३८ ॥
वक्तुमर्हसि धर्मज्ञ! मम सर्वार्थसाधकम् ॥ ३९ ॥

सारस्वत उवाच

यन्मां सरस्वती प्राह सारं वक्ष्यामि तच्छृणु ।
छायाकारं जगत्सर्वमुत्पत्तिक्षयधर्मि च । वारांगनानेत्रभंगस्तद्भङ्गुरमेव तत् ॥ ४०
(बुद्ध्वावाराङ्गनानेत्र भङ्गभङ्गुरमन्तवत् )।
धनायुर्यौवनं भोगाञ्जलचन्द्रवदस्थिरान् ।
बुद्ध्या सम्यक्परामृश्य स्थाणुं देवं समाश्रयेत् ॥ ४१ ॥
दानवान्पुरुषः पापं नालं कर्तुमितिश्रुतिः ।
स्थाणुभक्तोजन्ममृत्यू नाप्नोतीति श्रुतिस्तथा ॥ ४२ ॥
सावर्णिना च गाथेद्वेकीर्तिते श्रुणुयेपुरा । वृषोहिभगवान्धार्मोवृषभोयस्यवाहनम्
पूज्यते स महादेवः सः धर्मःपरउच्यते । दुखावर्ते तमोघोरे धर्माधर्मजले तथा ॥
क्रोधपंके मदग्राहेलोभबुद्बुदसंयुते । मानगम्भीरपातालेसत्त्वयानविभूषिते ॥ ४५॥
मज्जन्तं तारयत्येको हरः संसारसागरात् ।
दानं वृत्तं व्रतं वाचः कीर्तिधर्मोतथायुषः ॥ ४६ ॥
परोपकरणं कायादसारात्सारमुद्धरेत् । धर्मे रागः श्रुतौ चिंतादानेव्यसनमुत्तमम्
इन्द्रियार्थेषु वैराग्यं सम्प्राप्तं जन्मनःफलम् ।
देशेऽस्मिन्भारते जन्म प्राप्य मानुष्यमध्रुवम् ॥ ४८ ॥
न कुर्यादात्मनः श्रेयस्तेनाऽऽत्मा वञ्चितश्चिरम् ।
देवासुराणां सर्वेषां मानुष्यमतिदुर्लभम् ॥ ४९ ॥



तत्सम्प्राप्य तथा कुर्यान्न गच्छेन्नरकं यथा ।
सर्वस्यमूलं मानुष्यं तथा सर्वार्थसाधकम् ॥ ५० ॥
यदि लाभे न यत्नस्ते मूलंरक्ष प्रयत्नतः । महतापुण्यमूल्येन क्रीयतेकायनौस्त्वया
गन्तुं दुःखोदधेः पारं तर यावन्नभिद्यते । अविकारिशरीरत्वं दुष्प्राप्यंप्राप्यवैततः
नापक्रामति संसारादात्महा सनराधमः । तपस्तप्यन्तियततोजुह्वतेचात्रयज्विनः
दानानि चात्र दीयन्ते परलोकार्थमादरात् ॥ ५३ ॥

कात्यायन उवाच

दानस्य तपसो वाऽपि भगवन्किन दुष्करम् ।
किंवा महत्फलं प्रेत्य सारस्वत! ब्रवीहि तत् ॥ ५४ ॥

सारस्वत उवाच

नदानाद्दुष्करतरंपृथिव्यामस्तिकिञ्चन । मुनेप्रत्यक्षमेवैतद्दृश्यतेलोकसाक्षिकम्
परित्यज्य प्रियान्प्राणान्धनार्थे हि महाभयम् ।
प्रविशन्ति महालोभात्समुद्रमटवीं गिरिम् ॥ ५६ ॥
सेवामन्ये प्रपद्यन्ते श्ववृत्तिरिति या स्मृता ।
हिंसाप्रायां बहुक्लेशां कृषिं चैव तथापरे ॥ ५७ ॥
तस्य दुःखार्जितस्येह प्राणेभ्योऽपि गरीयसः ।
आयासशतलब्धस्य परित्यागः सुदुष्करः ॥ ५८ ॥
यद्ददाति यदश्नाति तदेव धनिनो धनम् । अन्ये मृतस्य क्रीडन्ति दारैरपिधनैरपि
अहन्यहनियाचन्तमहं मन्ये गुरुं यथा । मार्जनं दर्पणस्येव यः करोति दिनेदिने ॥
दीयमानं हि नापैति भूय एवाऽभिवर्धते ।
कूप उत्सिच्यमानो हि भवेच्छुद्धो बहूदकः ॥ ६१ ॥
एकजन्मसुखस्यार्थेसहस्राणिविलापयेत् । प्राज्ञोजन्मसहस्रेषुसञ्चिनोत्येकजन्मनि
मूर्खो हि न ददात्यत्यर्थानिह दारिद्र्यशङ्कया ।
प्राज्ञस्तु विसृजत्यर्थानमुत्र तस्यशङ्कया ॥ ६३ ॥

किं धनेनकरिष्यन्तिदेहिनोभङ्गुराश्रयाः । यदर्थं धनमिच्छन्तितच्छरीरमशाश्वतम्

अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा ।
तदिदं देहिदेहीति विपरीतमुपस्थितम् ॥ ६५ ॥
बोधयन्ति च यावन्तो देहीति कृपणञ्जनाः ।
अवस्थेयमदानस्य मा भूदेवं भवानपि ॥ ६६ ॥

दातुरेवोपकारायवदत्यर्थीतिदेहि मे । यस्माद्दाता प्रयात्यूर्ध्वमधस्तिष्टेत्प्रतिग्रही

दरिद्रा व्याधिता मूर्खाः परप्रेष्यकराःसदा ।
अदत्तदानाज्जायन्ते दुःखस्यैव हि भाजनाः ॥ ६८ ॥
धनवन्तमदातारं दरिद्रञ्चाऽतपस्विनम् ।
उभावम्भसि मोक्तव्यौ कण्ठे बद्ध्वा महाशिलाम् ॥ ६९ ॥

शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता शतसहस्रेषु दाता जायेत वा नवा

गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः ।
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्यते मही ॥ ७१ ॥
शिबिरौशीनरोऽङ्गानि सुतं च प्रियमौरसम् ।
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ७२ ॥

प्रतर्द्दनः काशिपतिः प्रदाय नयने स्वके । ब्राह्मणायातुलांकीर्तिमिहचामुत्रचाश्नुते

निमी राष्ट्रं च वैदेहो जामदग्न्यो वसुन्धराम् ।
ब्राह्मणेभ्यो ददौ चापि गयश्चोर्वीं सपत्तनाम् ॥ ७४ ॥

अवर्षति च पर्जन्ये सर्वभूतनिवासकृत् । वसिष्ठो जीवयामास प्रजापतिरिवप्रजाः

ब्रह्मदत्तश्च पाञ्चाल्यो राजा बुद्धिमतांवरः ।
निधिं शंखं द्विजाग्र्येभ्यो दत्वा स्वर्गमवाप्तवान् ॥ ७६ ॥
सहस्रजिच्चराजर्षिः प्राणानिष्टान्महायशाः ।
ब्रह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ॥ ७७ ॥
एतेचान्ये च बहवः स्थाणोर्दानेनभक्तितः ।



रुद्रलोकं गता नित्यं शान्तात्मानो जितेन्द्रियाः ॥ ७८ ॥
एषां प्रतिष्ठिता कीर्तिर्यावत्स्थास्यति मेदिनी ।
इति सञ्चिन्त्य सारार्थी स्थाणुदानपरोभव ॥ ७९ ॥
सोऽपि मोहं परित्यज्य तथा कात्यायनोऽभवत् ॥ ८० ॥

नारद उवाच

एवं सुश्रवसा प्रोक्तां कथामाकर्ण्य पद्मभूः ।
हर्षाश्रुसंयुतोऽतीव प्रशशंस मुहुर्मुहुः ॥ ८१ ॥
साधु ते व्याहृतं वत्स ! एवमेतन्न चान्यथा ।
सत्यं सारस्वतः प्राह सत्याचैवं तथा श्रुतिः ॥ ८२ ॥

दानं यज्ञानां वरूथं दक्षिणा लोके दातारं सर्वभूतान्युपजीवन्ति ।
दानेनारातीनपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं ।

प्रतिष्ठितं तस्माद्दानं परमं वदन्तीति ॥ ८३ ॥

संसारसागरे घोरे धर्माधर्मोर्मिसङ्कुले । दानं तत्र निषेवेत तच्च नौरिव निर्मितम्

इति सञ्चिन्त्य च मया पुष्करे स्थापिता द्विजाः ।
गङ्गायमुनयोर्मध्ये मध्यदेशे द्विजाः कृते ॥ ८५ ॥
स्थापिताः श्रीहरिभ्यां तु श्रीगौर्या वेदवित्तमाः ।
रुद्रेण नागराश्चैव पार्वत्या शक्तिपूर्भवाः ॥ ८६ ॥
श्रीमाले च तथा लक्ष्म्या ह्येवमादि सुरोत्तमैः ।
नानाप्रहाराः सन्दत्तालोकोद्धरणकाङ्क्षया ॥ ८७ ॥
नहिदानफलेकांक्षा काचिन्नोऽस्तिसुरोत्तमाः ।
साधुसंरक्षणार्थं हि दानं नः परिकीर्तितम् ॥ ८८ ॥

ब्राह्मणाश्चकृतस्थानानानाधर्मोपदेशनैः ।समुद्धरंतिवर्णांस्त्रींस्ततःपूज्यतमाद्विजाः

दानं चतुर्विधं दानमुत्सर्गः कल्पितं तथा ।
संश्रुतंचेति विविधन्तत्क्रमात्परिकीर्तितम् ॥ ९० ॥

वापीकूपतडागानां वृक्षविद्यासुरौकसाम्। मठप्रपागृहक्षेत्रदानमुत्सर्गइत्यसौ ॥
उपजीवन्निमान्यश्च पुण्यं कोऽपिचरेन्नरः। षष्ठमंशं स लभते यावद्योचिसृजेद्द्विजः
तदेषामेव सर्वेषां विप्रसंस्थापनं परम्। देवसंस्थापनं चैव धर्मस्तन्मूल एव यत्
देवतायतनं यावद्यावच्च ब्राह्मणगृहम्। तावद्दातुः पूर्वजानांपुण्यांशश्चोपतिष्ठति ॥

एतत्स्वल्पं हि वाणिज्यं पुनर्बहुफलप्रदम्।
जीर्णोद्धारे च द्विगुणमेतदेव प्रकीर्तितम् ॥ ९५ ॥
तस्मादिदं त्वहमपि ब्रवीमि सुरसत्तमाः !।
नास्ति दानसमं किंचित्सत्यं सारस्वतो जगौ ॥ ९६ ॥

नारद उवाच

इति सारस्वतप्रोक्तां तथा पद्मभुवेरिताम्।
साधु साध्वित्यमोदन्तसुराश्चाहं सुविस्मिताः ॥ ९७ ॥

ततः सभाविसर्गान्ते सुरम्ये मेरुमूर्धनि। उपविश्य शिलापृष्ठेअहमेतदचिन्तयम्

सत्यमाह विरिञ्चिस्तु स किमर्थं तु जीवति।
येनैकमपि तद्वृत्तं नैव येन कृतार्थता ॥ ९९ ॥
तदहं दानपुण्यं हि करिष्यामि कथं स्फुटम्।
कौपीनदण्डात्मधनो धनं स्वल्पं हि नास्ति मे ॥ १०० ॥

अनर्हते यद्ददाति न ददाति तथार्हते। अर्हानर्हपरिज्ञानाद्दानधर्मो हि दुष्करः ॥

देशे काले च पात्रे च शुद्धेन मनसा तथा।
न्यायार्चितं च यो दद्याद्यौवने स तदश्नुते ॥ १०२ ॥
तमोवृतस्तु यो दद्याद्भयात्क्रोधात्तथैव च।
भुङ्क्ते न दानफलं तद्धि गर्भस्थो नात्र संशयः ॥ १०३ ॥
बालत्वेऽपि च सोऽश्नाति यद्दत्तं दम्भकारणात्।
दत्तमन्यायतो वित्तं तथा वै चाऽर्थकारणम् ॥ १०४ ॥

वृद्धत्वेहि समश्नातिनरोवै नात्रसंशयः। तस्माद्देशे च कालेचसुपात्रेविधिनानरः



शुभार्जितं प्रयुञ्जीत श्रद्धया शाठ्यवर्जितः ॥ १०५ ॥

तदेतन्निर्धनत्वाच्च कथं नामभविष्यति। सत्यमाहुःपुरावाक्यंपुराणमुनयोऽमलाः

नाधनस्याऽस्त्ययं लोको न परश्च कथञ्चन।
अभिशस्तं प्रपश्यन्ति दरिद्रं पार्श्वतः स्थितम् ॥ १०७ ॥
दारिद्र्यं पातकं लोके कस्तच्छंसितुमर्हति।
पतितः शोच्यते सर्वैर्निर्धनश्चापि शोच्यते ॥ १०८ ॥

यः कृशाश्वः कृशधनः कृशभृत्यः कृशातिथिः। सर्वैप्रोक्तःकृशोनामनशरीरकृशःकृशः

अर्थवान् दुष्कुलीनोऽपि लोके पूज्यतमो नरः।
शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते ॥ ११० ॥
ज्ञानवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः।
ते सर्वे धनवृद्धस्य द्वारि तिष्ठन्ति किङ्कराः ॥ १११ ॥

यद्यप्ययंत्रिभुवनेअर्थोऽस्माकंपराङ्नहि। तथाप्यन्यप्रार्थितोहितस्यैवफलदोभवेत्

अथ वै तत्पुरा सर्वं चिन्तयिष्यामि सुस्फुटम्।
विलोकयामि पूर्वं तु किंचिद्योग्यं हि स्थानकम् ॥ ११३ ॥
स चिन्तयित्वेति बहुप्रकारं देशांश्च ग्रामान्नगराणि चाऽऽश्रमान्।
बहूनहं पर्यटन्नाप्तवान्हि स्थानं हितं स्थापये यत्र विप्रान् ॥ ११४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायांप्रथमे माहेश्वरखण्डे कौमारिकाखण्डे नारदार्जुनसंवादे दानप्रशंसावर्णनंनाम द्वितीयोऽध्यायः ॥२॥

—:*:—

# तृतीयोऽध्यायः

## नारदार्जुनसम्वादे महीसागरसङ्गमतीर्थमाहात्म्यम्

सूत उवाच

एवं स्थानानि पुण्यानि यानियानीह वै भुवि ।
निरीक्षंस्तत्र तत्राऽहं नारदो वीरसत्तमः !॥ १ ॥
विचरन् मेदिनीं सर्वां प्राप्तोऽहमाश्रमं भृगोः ।
यत्र रेवा नदी पुण्या सप्तकल्पस्मरा वरा ॥ २ ॥
महापुण्या पवित्रा च सर्वतीर्थमयी शुभा । पुनातिकीर्तनेनैव दर्शनेन विशेषतः ॥
तत्रावगाहनात्पार्थमुच्यतेजंतुरंहसा । यथासा पिङ्गलानाडी देहमध्येव्यवस्थिता
इयं ब्रह्माण्डपिण्डस्य स्थाने तस्मिन्प्रकीर्तिता ।
तत्राऽऽस्ते शुक्लतीर्थाख्यं रेवायां पापनाशनम् ॥ ५ ॥
यत्र वै स्नानमात्रेण ब्रह्महत्या प्रणश्यति । तस्यापिसन्निधौ पार्थ रेवायाउत्तरेतटे
नानावृक्षसमाकीर्णं लतागुल्मोपशोभितम् ।
नानापुष्पफलोपेतं कदलीखण्डमण्डितम् ॥ ७ ॥
अनेकश्वापदाकीर्णं विहगैरनुनादियम् ।
सुगन्ध पुष्प शोभाढ्यं मयूररवनादितम् ॥ ८ ॥
भ्रमरैः सर्वमुत्सृज्य निलीनं रावसंयुतम् ।
यथा संसारमुत्सृज्य भक्तेन हरपादयोः ॥ ९ ॥
कोकिलामधुरैः स्वानैर्नादयन्ति तथा मुनीन् ।
यथा कथामृताख्यानैर्ब्राह्मणा भवभीरुकान् ॥ १० ॥
यत्र वृक्षा ह्लादयन्ति फलैःपुष्पैश्च पत्रकैः । छायाभिरपिकाष्ठैश्च लोकानिवहरव्रता
पुत्र पुत्रेति वात्स्यन्ते यत्र पुत्र प्रियाः खगाः ।



यथा शिवप्रियाः शैवा नित्यं शिव शिवेति च ॥ १२ ॥
एवंविधं मुनेस्तस्य भृगोराश्रममण्डलम् । विप्रैस्त्रैविद्यसंयुक्तैःसर्वतःसमलङ्कृतम्
ऋग्यजुः सामनिर्घोषैरापूरितदिगन्तरम् । रुद्रभक्तेन धीरेण यथैव भुवनत्रयम् ॥
तत्राहं पार्थ सम्प्राप्तो यत्रास्ते मुनिसत्तमः ।
भृगुः परमधर्मात्मा तपसा द्योतितप्रभः ॥ १५ ॥
आगच्छन्तं तु मां दृष्ट्वा दीनं च मुदितं तथा ।
अभ्युत्थानं कृतं सर्वैर्विप्रैर्भृगुपुरोगमैः ॥ १६ ॥
कृत्वा सुस्वागतं दत्त्वा अर्घाद्यं भृगुणा सह ।
आसनेषूपविष्टास्ते मुनीन्द्रा ग्राहिता मया ॥ १७ ॥
विश्रान्तं तु ततो ज्ञात्वा भृगुर्मामप्युवाच ह ।
क्व गन्तव्यं मुनिश्रेष्ठ! कस्मादिह समागतः ॥ १८ ॥
आगमेकारणं सर्वं समाचक्ष्व परिस्फुटम् ।
ततस्तं चिन्तयाविष्टो भृगुं पार्थाहमब्रुवम् ॥ १९ ॥
श्रूयतामभिधास्यामि यदर्थमहमागतः । मया पर्यटिता सर्वासमुद्रान्ता चमेदिनी
द्विजानां भूमिदानार्थं मार्गमाणः पदे पदे ।
निर्दोषां च पवित्रां च तीर्थेष्वपि समन्विताम् ॥ २१ ॥
रम्यां मनोरमां भूमिं न पश्यामि कथञ्चन ।

भृगुरुवाच

विप्राणां स्थापनार्थाय मयाऽपि भ्रमता पुरा ॥ २२ ॥
पृथ्वीसागरपर्यन्ता दृष्टा सर्वा तदानघ । महीनाम नदी पुण्या सर्वतीर्थमयीशुभा
दिव्या मनोरमा सौम्या महापापप्रणाशिनी ।
नदीरूपेण तत्रैव पृथ्वी सा नात्र संशयः ॥ २४ ॥
पृथिव्यां यानि तीर्थानि दृष्टादृष्टानि नारद !।
तानि सर्वाणि तत्रैव निवसन्ति महीजले ॥ २५ ॥

सा समुद्रेण सम्प्राप्ता पुण्यतोया महानदी । सञ्जातस्तत्र देवर्षे महीसागरसंगमः

स्तम्भाख्यं तत्र तीर्थन्तु त्रिषु लोकेषु विश्रुतम् ।

तत्र ये मनुजाः स्नानं प्रकुर्वन्ति विपश्चितः ॥ २७ ॥

सर्वपापविनिर्मुक्ता नोपसर्पन्ति वै यमम् । तत्राद्भुतं हि दृष्टं मे पुरा स्नातुंगतेन वै

तदहं कीर्तयिष्यामि मुने! शृणु महाद्भुतम् ।

यावत्स्नातुं व्रजाम्यस्मिन् महीसागरसङ्गमे ॥ २९ ॥

तीरे स्थितं प्रपश्यामि मुनीन्द्रं पावकोपमम् ।

प्रांशुं वृद्धं चाऽस्थिशेषं तपोलक्ष्म्या विभूषितम् ॥ ३० ॥

भूजावूर्ध्वौ ततः कृत्वा प्ररुदन्तं मुहुर्मुहुः ।

तं तथा दुःखितं दृष्ट्वा दुःखितोऽहमथाभवम् ॥ ३१ ॥

सतां लक्षणमेतद्धि यद्दृष्ट्वा दुःखितं जनम् । शतसंख्यंतस्य भवेत्तथाऽहंविललापह

अहिंसा सत्यमस्तेयं मानुष्ये सति दुर्लभम् ।

ततस्तमुपसङ्क्रम्य पर्यपृच्छमहं तदा ॥ ३३ ॥

किमर्थंरोदिषि मुने!शोके किं कारणंतव । सुगुह्यमपि चेद्ब्रूहिजिज्ञासामहतीहिमे

मुनिस्ततो मामवदद्भृगोनिर्भाग्यवाहनम् ।

तेन रोदिमि मा पृच्छ दुर्भाग्यं चालपेद्धि कः ॥ ३५ ॥

तमहं विस्मयाविष्टः पुनरेवेदमब्रुवम् । दुर्लभं भारते जन्म तत्रापि च मनुष्यता ॥

मनुष्यत्वे ब्राह्मणत्वं मुनित्वं तत्र दुर्लभम् ।

तत्रापि च तपःसिद्धिः प्राप्यैतत्पञ्चकं परम् ॥ ३७ ॥

किमर्थं रोदिषि मुने विस्मयोऽत्र महान्मम । एवं संपृच्छते मह्यमेतस्मिन्नेवचान्तरे

सुभद्रोनाम नाम्ना च मुनिस्तत्राभ्युपाययौ ।

स हि मेरुं परित्यज्य ज्ञात्वा तीर्थस्य सारताम् ॥ ३९ ॥

कृताश्रमः पूजयति सदास्तम्भेश्वरं मुनिः ।

सोऽप्येवं मामिवापृच्छन् मुनिं रोदनकारणम् ॥ ४० ॥



अथाऽऽहाचम्य स मुनिः श्रूयतां कारणं मुने !।

अहं हि देवशर्माख्यो मुनिः संयतवाङ्मनाः ॥ ४१ ॥

निवसामि कृतस्थानो गंगासागरसंगमे । तत्र दर्शे तर्पयामि सदैव च पितृनहम्

श्राद्धान्ते ते च प्रत्यक्षा ह्याशिषो मे वदन्ति च ।

ततः कदाचित् पितरः प्रहृष्टा मामथाऽब्रुवन् ॥ ४३ ॥

वयं सदाऽत्र चायामो देवशर्मंस्तवान्तिके ।

स्थानेऽस्माकं कदाचित्त्वं न चायासि कुतः सुत !॥ ४४ ॥

स्थानं दिदृक्षुस्तच्चाहं न शक्तोऽस्मि निवेदितुम् ।

ततः परममित्युक्त्वा गतवान् पितृभिः सह ॥ ४५ ॥

पितृणां मन्दिरं पुण्यं भौमलोकसमास्थितम् ।

तत्र तत्र स्थितश्चाहं तेजोमण्डलदुर्दृशान् ॥ ४६ ॥

दृष्ट्वाऽग्रतः पूजयाद्यानपृच्छं स्वान् पितृनिति ।

के ह्यमी समुपायान्ति भृशं तृप्ता भृशार्चिताः ॥

भृशं प्रमुदिता नैव तथा यूयं यथा ह्यमी ॥ ४७ ॥

पितर ऊचुः

भद्रं ते पितरः पुण्याः सुभद्रस्य महामुनेः । तर्पितास्तेन मुनिना महीसागरसङ्गमे

सर्वतीर्थमयी यत्र निलीना ह्युदधौ मही । तत्र दर्शे तर्पयति सुभद्रस्तानमूनसुत

इत्याकर्ण्य वचस्तेषां लज्जितोऽहं भृशं तदा ।

विस्मितश्च प्रणम्यैतान्पितृन्स्वं स्वस्थानमागतः ॥ ५० ॥

यथा तथा चिन्तितं च तत्र यास्याम्यहं स्फुटम् ।

पुण्यो यत्रापि विख्यातो मही सागरसंगमः ॥ ५१ ॥

कृताश्रमश्च तत्रैव तर्पयिष्ये निजान् पितृन् ।

दर्शे दर्शे यथा चासौ स्तुल्यनामा सुभद्रकः ॥ ५२ ॥

किं तेन ननु जातेन कुलाङ्गारेण पापिना ।

यस्मिञ्जीवत्यपि निजाः पितरोऽन्यस्पृहाकराः ॥ ५३ ॥
इतिसञ्चिन्त्यमुदितोरुचिंभार्यामथाब्रुवम् । रुचे!त्वयासमायुक्तोमहीसागरसङ्गमम्
गत्वा स्थास्यामि तत्रैव शीघ्रं त्वं सम्मुखीभव ।
पतिव्रताऽसि शुद्धाऽसि कुलीनाऽसि यशस्विनि !।
तस्मादेतन्मम शुभे ! कर्तुमर्हसि चिन्तितम् ॥ ५५ ॥

रुचिरुवाच

हता तस्य जनिर्नाभूत्कथं पाप ! दुरात्मना ।
श्मशानस्तम्भ येनाऽहं दत्ता तुभ्यं कृतं त्वया । इहकन्दफलाहारैर्यत्किंतेनन पूर्यते
नेतुमिच्छसि मां तत्र यत्र क्षारोदकं सदा । त्वमेवतत्र संयाहि नन्दन्तुतवपूर्वजाः
गच्छ वा तिष्ठ वा वृद्ध वस वा काकवच्चिरम् ।
तथा ब्रुवन्त्यां तस्यां तु कर्णावस्मि पिधाय च ॥ ५६ ॥
( तथा ब्रुवत्यास्तस्याश्च कर्णौ तत्र पिधाय च ) ।
विपुलं शिष्यमादिश्य गृह एकोऽत्र आगतः ।
सोऽहं स्नात्वाऽत्र सन्तर्प्य पितृञ्छ्रद्धापरायणः ॥ ६० ॥
चिन्तां सुविपुलां प्राप्तो नरके दुष्कृती यथा ।
यदि तिष्ठामि चाऽत्रैव अर्धदेहधरो ह्यहम् ॥ ६१ ॥
नरो हि गृहिणीहीनो अर्धदेह इति स्मृतः ।
यथाऽऽत्मना विना देहे कार्यं किञ्चिन्न सिध्यति ॥ ६२ ॥
एवं गृहिण्या हीनो हि न स कर्मसु शस्यते ।
यो नरः स्त्रीषु देहेषु अनुरक्तस्त्वसौ पशुः ॥ ६३ ॥
अनयोर्हि फलं ग्राह्यं सारता नाऽत्र काचन ।
अर्धदेही च मनुजस्त्वसंस्पृश्यः सतांमतः ॥ ६४ ॥
औत्तानपादिरस्पृश्य उत्तमो हि सुरैःकृतः । अथचेत्तत्रसंयामि न महीसागरस्ततः
यामि वा तत्कथं पादौ चलतो मे कथञ्चन ।



एतस्मिन् मे मनो विद्धं खिद्यतेऽज्ञान संकटे ॥ ६६ ॥
अतोऽहमतिमुह्यामि भृशं शोचामि रोदिमि ।
इति श्रुत्वा वचस्तस्य भृशं रोमाञ्चपूरितम् ॥ ६७ ॥
साधुसाध्वित्यथोवाचतं सुभद्रोऽप्यहंतथा । दण्डवच्चप्रणमितोमहीसागरसङ्गमम्
चिन्तयावश्च मनसि प्रतीकारं मुनेरुभौ । यो हि मानुष्यमासाद्यजलबुद्बुदभंगुरम्
परार्थाय भवत्येषपुरुषोऽन्ये पुरीषकाः । ततः सञ्चिन्त्यप्रादेहं सुभद्रो मुनिसत्तमम्
मा मुने परिखिद्यस्व देवशर्मन् ! स्थिरो भव ।
अहं ते नाशयिष्यामि शोकं सूर्यस्तमो यथा ॥ ७१ ॥
गमिष्याम्याश्रमंत्वंचनात्रापिपरिहास्यते । श्रृणुतत्कारणंतुभ्यंतर्पयिष्येपितृनहम्

देवशर्मोवाच

एवं ते वदमानस्य आयुरस्तु शतं समाः । यदशक्यं महत्कर्म कर्तुमिच्छसि मत्कृते
हर्षस्थाने विषादश्च पुनर्मां बाधते श्रृणु ।
अपि वाक्यं शुभं सन्तो न गृह्णन्ति मुधा मुने !॥ ७४ ॥
कथमेतन् महत्कर्म कारयामि मुधा वद ।
पुनः किंचित्प्रवक्ष्यामि यथा मे निष्कृतिर्भवेत् ॥ ७५ ॥
शापितोऽसि मया प्राणैर्यथा वच्मि तथा कुरु ।
अहं सदा करिष्यामि दर्शे चोद्दिश्यते पितृन् ॥ ७६ ॥
श्राद्धं गङ्गार्णवे चाऽत्र मत्पितृणां त्वमाचर ।
अहं चैवापि तपसः संचितस्याऽपि जन्मना ॥
चतुर्भागं प्रदास्यामि एवमेवैतदाचर ॥ ७७ ॥

सुभद्र उवाच

यद्येवं तव संतोषस्त्वेवमस्तु मुनीश्वर ! ।
साधूनां च यथा हर्षस्तथा कार्यं चिजानता ॥ ७८ ॥

भृगुरुवाच

देवशर्मा ततो हृष्टो दत्त्वा पुण्यं त्रिवाचिकम् ।
चतुर्थांशं ययौ धाम स्वं सुभद्रोऽपि च स्थितः ॥ ७६ ॥
एवंविधो नारदाऽसौ महीसागरसंगमः । यमनुस्मरतोमह्यं रोमाञ्चोऽद्याऽपिवर्तते

नारद उवाच

इतिश्रुत्वा फाल्गुनाहं हर्षगद्गदयागिरा । मृतोमृतइवावोचंसाधुसाध्विवतितंभृगुम्
यूयं वयं गमिष्यामो महीतीरं सुशोभनम् ।
आवामीक्षावहे सर्वं स्थानकं तदनुत्तमम् ॥ ८२ ॥
मम चैवं वचः श्रुत्वा भृगुः सह मयाययौ ।
समस्तं तु महापुण्यं महीकूलं निरीक्षितम् ॥ ८३ ॥
तद्दृष्ट्वा चातिहृष्टोऽहमासं रोमांचकञ्चुकः । अब्रुवं मुनिशार्दूलं हर्षगद्गदयागिरा
त्वत्प्रसादात् करिष्यामि भृगोःस्थानमनुत्तमम् ।
स्वस्थानं गम्यतां ब्रह्मन्नतः कृत्यं विचिन्तये ॥ ८५ ॥
एवं भृगुं चाऽस्मि विसर्जयित्वा कल्लोलकोलाहलकौतुकीतटे ।
अथोपविश्येदमचिन्तयं तदा किं कृत्यमात्मानमिवैकयोगी ॥ ८६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे
कौमारिकाखण्डे नारदार्जुनसम्वादे महीसागरसङ्गमतीर्थमाहात्म्ये
तृतीयोऽध्यायः ॥ ३ ॥

---

# चतुर्थोऽध्यायः

## नारदार्जुनसम्वादे दानभेदप्रशंसावर्णनम्

नारद उवाच

ततस्त्वहं चिन्तयामि कथं स्थानमिदं भवेत् ।
ममायत्तं यतो राज्ञां भूमिरेषा सदा वशे ॥ १ ॥
यत्त्वहं धर्मवर्माणं गत्वा याचेह मेदिनीम् ।
अर्पयत्येव स च मे याचितो न पुनः परः ॥ २ ॥
तथा हि मुनिभिः प्रोक्तं द्रव्यं त्रिविधमुत्तमम् ।
शुक्लं मध्यं च शबलमधमं कृष्णमुच्यते ॥ ३ ॥
श्रुतेः संपादनाच्छिष्यात् प्राप्तं शुक्लं च कन्यया ।
तथा कुशीदवाणिज्यकृषियाचितमेव च ॥ ४ ॥
शबलंप्रोच्यतेसद्भिर्द्यूतचौर्येण साहसैः । व्याजेनोपार्जितं यच्च तत्कृष्णंसमुदाहृतम्
शुक्लवित्तेन यो धर्मं प्रकुर्याच्छ्रद्धयान्वितः । तीर्थपात्रं समासाद्यदेवत्वे तत्समश्नुते
राजसेन च भावेन वित्तेन शबलेन च । प्रदद्याद्दानमर्थिभ्यो मानुष्यत्वे तदश्नुते
तमोवृतस्तु यो दद्यात्कृष्णवित्तेन मानवः ।
तिर्यक्त्वे तत्फलं प्रेत्य समश्नाति नराधमः ॥ ८ ॥
तत्तु याचितद्रव्यं मे राजसं हि स्फुटं भवेत् ।
अथ ब्राह्मणभावेन नृपं याचे प्रतिग्रहम् ॥ ६ ॥
तदाप्यहो चातिकष्टंहेतुनातेन मेमतम् । अयं प्रतिग्रहोघोरोमध्वास्वादोविषोपमः
प्रतिग्रहेणसंयुक्तंह्यमीवमाविशेद्द्विजम् । तस्मादहंनिवृत्तश्चपापादस्मात्प्रतिग्रहात्
ततः केनाप्युपायेन द्वयोरन्यतरेण तु । स्वायत्तं स्थानकं कुर्म एतत्सञ्चिन्तयेमुहुः
यथा कुभार्यः पुरुषश्चिन्तान्तं न प्रपद्यते । तथैवविमृशंश्चाहंचिन्तान्तंनलभाम्यणु

एतस्मिन्नन्तरे पार्थ! स्नातुं तत्र समागताः । बहवोमुनयःपुण्येमहीसागरसङ्गमे॥
अहं तानब्रवं सर्वान्कुतो यूयंसमागताः । ते मामूचुः प्रणम्याथ सौराष्ट्रविषयेमुने
धर्मवर्मेतिनृपतिर्योऽस्यदेशस्य भूपतिः । स तु दानस्य तत्वार्थीतेपेवर्षगणान्बहून्

ततस्तं प्राह खे वाणी श्लोकमेकं नृप! शृणु ।
द्विहेतु षडधिष्ठानं षडङ्गं च द्विपाकयुक् ॥ १७ ॥

चतुः प्रकारंत्रिविधंत्रिनाशंदानमुच्यते । इत्येकं श्लोकमाभाष्यखेवाणीविररामह

श्लोकस्यार्थं नावभाषे पृच्छमानाऽपि नारद ।
ततो राजा धर्मवर्मा पटहेनान्वघोषयत् ॥ १९ ॥
यस्तुश्लोकस्य चैवास्य लब्धस्य तपसा मया ।
करोति सम्यग्व्याख्यानं तस्य चैतद्ददाम्यहम् ॥ २० ॥

गवांचसतनियुतंसुवर्णंतावदेवतु । सप्तग्रामान्प्रयच्छामिश्लोकाव्याख्यांकरोतियः

पटहेनेति नृपतेः श्रुत्वा राज्ञो वचो महत् ।
आजग्मुर्बहुदेशीया ब्राह्मणाः कोटिशो मुने !॥ २२ ॥

पुनर्दुर्बोधविन्यासःश्लोकस्तैर्विप्रपुङ्गवैः । आख्यातुंशक्यते नैवगुडोमूकैर्यथामुने
वयं च तत्रयाताःस्मोधनलोभेननारद । दुर्बोधत्वान्नमस्कृत्यश्लोकंचात्रसमागताः

दुर्व्याख्येयस्त्वयं श्लोको धनं लभ्यं न चैव नः ।
तीर्थयात्रां कथं यामीत्येवाचिंत्यात्रचागताः ॥ २५ ॥
एवं फाल्गुन तेषां तु वचः श्रुत्वा महात्मनाम् ।
अतीव सम्प्रहृष्टोऽहं तान्विसृज्येत्यचिन्तयम् ॥ २६ ॥
अहो प्राप्तउपायो मे स्थानप्राप्तौ न संशयः ।
श्लोकं व्याख्याय नृपतेर्लप्स्ये स्थानं धनं तथा ॥
विद्यामूल्येन नैवं च याचितःस्यात्प्रतिग्रहः ।
सत्यमाह पुराणर्षिर्वासुदेवो जगद्गुरुः ॥ २८ ॥
धर्मस्य यस्य श्रद्धास्यान्न च सा नैव पूर्यते ।



पापस्य यस्य श्रद्धास्यान्न च सापि न पूर्यते ॥ २९ ॥
एवं विचिन्त्य विद्वांसः प्रकुर्वन्ति यथारुचि ।
सत्यमेतद्विभोर्वाक्यं दुर्लभोऽपि यथाहि मे ॥ ३० ॥
मनोरथोऽयं सफलः सम्भूतोऽङ्कुरितःस्फुटम् ।
एनं च दुर्विदं श्लोकमहञ्जानामि सुस्फुटम् ॥ ३१ ॥

अमूर्तैः पितृभिःपूर्वमेचख्यातोहिमेपुरा । एवंहर्षान्वितःपार्थसञ्चिन्त्याऽहन्ततोमुहुः
प्रणम्य तीर्थं चलितो महीसागरसङ्गमम् । वृद्धब्राह्मणरूपेण ततोऽहंयातवान्नृपम्

इदं भणितवानस्मि श्लोकव्याख्यां नृप! शृणु ।
यत्ते पटहविख्यातं दानञ्च प्रगुणीकुरु ॥ ३४ ॥
एवमुक्ते नृपः प्राह प्रोचुरेवं हि कोटिशः ।
द्विजोत्तमाः पुनर्नास्य प्रोक्तुमर्थो हि शक्यते ॥ ३५ ॥
के द्विहेतूषडाख्यातान्यधिष्ठानानि कानिच ।
कानि चैव षडङ्गानि कौद्वौ पाकौ तथा स्मृतौ ॥ ३६ ॥
के च प्रकाराश्चत्वारः किंस्वित्तत्त्रिविधं द्विज !।
त्रयोनाशाश्चकेप्रोक्ता दानस्यैतत्स्फुटं वद ॥ ३७ ॥
स्फुटान्प्रश्नानिमान्सप्त यदि वक्ष्यसि ब्राह्मण !।
ततो गवां सप्तनियुतं सुवर्णं तावदेव तु ॥ ३८ ॥
सप्तग्रामांश्च दास्यामि नो चेद्यास्यसि स्वं गृहम् ।
इत्युक्तवचनं पार्थ! सौराष्ट्रस्वामिनं नृपम् ॥ ३९ ॥

धर्मवर्माणमस्त्वेवंप्रावोचमवधारय । श्लोकव्याख्यांस्फुटांवक्ष्येदानहेतूचतौशृणु

अल्पत्वं वा बहुत्वम्वादानस्याभ्युदयावहम् ।
श्रद्धाशक्तिश्च दानानां वृद्ध्याक्षयकरे हिते ॥ ४१ ॥

तत्र श्रद्धाविषये श्लोका भवन्ति । कायक्लेशैश्च बहुभिर्न चैवाऽर्थस्य राशिभिः

धर्मः सम्प्राप्यते सूक्ष्मः श्रद्धा धर्मोऽद्भुतं तपः ।

श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत् ॥ ४३ ॥
सर्वस्वं जीवितं चापि दद्यादश्रद्धयायदि ।
नाप्नुयात्सफलं किंचिच्छ्रद्दधानस्ततो भवेत् ॥ ४४ ॥
श्रद्धया साध्यते धर्मो महद्भिर्नार्थराशिभिः ।
अकिंचना हि मुनयः श्रद्धावन्तो दिवङ्गताः ॥ ४५ ॥
त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ ४६ ॥
यजन्ते सात्त्विकादेवान्यक्षरक्षांसिराजसाः ।
प्रेतान्भूतपिशाचांश्च यजन्ते तामसा जनाः ॥ ४७ ॥
तस्माच्छ्रद्धावता पात्रे दत्तं न्यायार्जितं हि यत् ।
तेनैव भगवान्रुद्रः स्वल्पकेनाऽपि तुष्यति ॥ ४८ ॥

शक्तिविषये च श्लोका भवन्ति ।

कुटुम्बभुक्तवसनाद् ( भरणाद् ) देयं यदतिरिच्यते ।
मध्वास्वादो विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत् ॥ ४९ ॥
शक्ते परजने दाता स्वजने दुःखजीविनि । मध्वापानविषादःसधर्माणांप्रतिरूपकः
भृत्यानामुपरोधेनयत्करोत्यौर्ध्वदैहिकम् । तद्भवत्यसुखोदर्कं जीवतोऽस्यमृतस्यच
सामान्यं याचितं न्यासमाधि ( धे ) र्दाराश्चदर्शनम् ( दानश्चतद्धनम् ) ।
अन्वाहितं च निक्षेपः ( निक्षिप्तं ) सर्वस्वं चान्वये सति ॥ ५२ ॥
आपत्स्वपि न देयानि नववस्तूनि पण्डितैः ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥ ५३ ॥
इति तेगदितौराजन्द्वौहेतूश्रूयतामतः । अधिष्ठानानि वक्ष्यामिषडेव शृणुतान्यपि
धर्मंमर्थं च कामं च व्रीडाहर्षभयानि च । अधिष्ठानानि दानानां षडेतानिप्रचक्षते
पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् । केवलं धर्मबुद्धया यद्धर्मदानं तदुच्यते
धनिनं धनलोभेन लोभयित्वाऽर्थमाहरेत् । तदर्थदानमित्याहुः कामदानमतः शृणु



प्रयोजनमपेक्ष्यैव प्रसङ्गाद्यत्प्रदीयते ।
अनर्हेषु सरागेण कामदानं तदुच्यते ॥ ५८ ॥
संसदि व्रीडयाऽऽश्रुत्य अर्थिभ्यःप्रददाति च ।
प्रतिदीयते च ( तुतद् ) यद्दानं व्रीडादानमिति श्रुतम् ॥ ५९ ॥
दृष्ट्वा प्रियाणि श्रुत्वा वाहर्षवद्यत्प्रदीयते । हर्षदानमिति प्रोक्तं दानं तद्धर्मचिन्तकैः
आक्रोशानर्थहिंसानां प्रतीकाराय यद्भवेत् । दीयतेऽनुपकर्तृभ्योऽभयदानं तदुच्यते
प्रोक्तानि षडधिष्ठानान्यङ्गान्यपि च षट्च्छृणु ।
दाता प्रतिग्रहीता च शुद्धिर्देयं चधर्मयुक् ॥ ६२ ॥
देशकालौच दानानामङ्गान्येतानि षड् विदुः ।
अपरोगी च धर्मात्मा दित्सुरव्यसनः शुचिः ॥ ६३ ॥
अनिंद्याजीवकर्मा च षड्भिर्दाता प्रशस्यते ।
अनृजुश्चाश्रद्दधानोऽशान्तात्माधृष्टभीरुकः ॥ ६४ ॥
असत्यसन्धो निद्रालुर्दाताऽयं तामसोऽधमः ।
त्रिशुक्लः कृशवृत्तिश्च घृणालुः सकलेन्द्रियः ॥ ६५ ॥
विमुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते ।
सौमुख्यादभिसम्प्रीतिरर्थिनां दर्शने सदा ।
सत्कृतिश्चानसूया च तदा शुद्धिरितिस्मृता ॥ ६६ ॥
अपराबाधमक्लेशं स्वयत्नेनार्जितं धनम् ।
स्वल्पं वा विपुलम्वाऽपि देयमित्यभिधीयते ॥ ६७ ॥
तेनापि किल धर्मेण उद्दिश्य किल किञ्चन ।
देयं तद्धर्मयुगितिशून्ये शून्यं फलं स्मृतम् ॥ ६८ ॥
न्यायेन दुर्लभं द्रव्यं देशेकालेऽपि वा पुनः ।
दानार्हौ देशकालौ तौ स्यातांश्रेष्ठौ न चान्यथा ॥ ६९ ॥
षडङ्गानीतिचोक्तानि द्वौ च पाकावतःशृणु ।

द्वौ पाकौ दानजौ प्राहुः परत्राऽथ त्विहोच्यते ॥ ७० ॥

सद्भ्यो यद्दीयते किंचित्तत्परत्रोपतिष्ठति । असत्सु दीयतेकिंचित्तद्दानमिहभुज्यते

द्वौपाकाविति निर्दिष्टौ प्रकारांश्चतुरःशृणु ।

ध्रुवमाहुस्त्रिकं काम्यं नैमित्तिकमितिक्रमात् ॥ ७२ ॥

वैदिकोदानमार्गोऽयंचतुर्धावर्ण्यते द्विजैः । प्रपारामतडागादिसर्वकामफलंध्रुवम्

तदाहुस्त्रिकमित्याहुर्दीयते यद्दिनेदिने । अपत्यविजयैश्वर्यस्त्रीबालार्थं प्रदीयते ॥

इच्छासंस्थं च यद्दानं काम्यमित्यभिधीयते ।

कालापेक्षं क्रियापेक्षं गुणापेक्षमितिस्मृतौ ॥ ७५ ॥

त्रिधानैमित्तिकं प्रोक्तं सदाहोमविवर्जितम् ।

इति प्रोक्ताः प्रकारास्ते त्रैविध्यमभिधीयते ॥ ७६ ॥

अष्टोत्तमानि चत्वारि मध्यमाधिविधानतः ।

कानीयसानि शेषाणि त्रिविधत्वमिदं विदुः ॥ ७७ ॥

गृहप्रासादविद्याभूगोकूपप्राणहाटकम् । एतान्युत्तमदानानि उत्तमद्रव्यदानतः ॥

अन्नारामं च वासांसि हयप्रभृतिवाहनम् ।

दानानि मध्यमानीति मध्यमद्रव्यदानतः ॥ ७९ ॥

उपानच्छत्रपात्रादिदधिमध्वासनानि च ॥ ८० ॥

दीपकाष्ठोपलादीनि चरमं बहुवार्षिकम् । इति कानीयसान्यहुर्दाननाशत्रयं शृणु

यद्दत्त्वातप्यतेपश्चादासुरंतद्वृथा मतम् । अश्रद्धयायद्ददाति राक्षसंस्याद्वृथैवतत्

यच्चाऽऽक्रुश्य ददात्यंग दत्त्वा च क्रोशति द्विजम् ।

पैशाचन्तद्वृथा दानं दाननाशास्त्रयस्त्वमी ॥ ८३ ॥

इति सप्तपदैर्बद्धं दानमाहात्म्यमुत्तमम् ।

शक्त्या ते कीर्तितं राजन्साधुवाऽसाधु वा वद ॥ ८४ ॥

धर्मवर्मोवाच

अद्य मे सफलं जन्म अद्य मे सफलंतपः । अद्य ते कृतकृत्योऽस्मि कृतः कृतिमतांवर



पठित्वा सकलं जन्म ब्रह्मचारीयथा वृथा ।

बहुक्लेशात्प्राप्तभार्यः सा वृथाऽप्रियवादिनी ॥ ८६ ॥

क्लेशेनकृत्वा कूपं वा सचक्षारोदकोवृथा । बहुक्लेशैर्जन्मनीतं विनाधर्मंतथावृथा

एवं मे यद्वृथा नाम जातं तत्सफलं त्वया ।

कृतं तस्मान्नमस्तुभ्यं द्विजेभ्यश्च नमोनमः ॥ ८८ ॥

सत्यमाह पुरा विष्णुः कुमारान्विष्णुसद्मनि ॥ ८९ ॥

नाहं तथाऽद्मि यजमानहविर्वितानच्योतद्घृतप्लुतमदन्हुतभुङ्मुखेन ।

यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं तुष्टस्य मय्यपहितैर्निजकर्मपाकैः ॥ ९०

तन्मयाऽशर्मणा वापि यद्विप्रेष्वप्रियं कृतम् ।

सर्वस्य प्रभवो विप्रास्तत्क्षमन्तां प्रसादये ॥ ९१ ॥

त्वं च कोऽसि नसामान्यः प्रणम्याहं प्रसादये ।

आत्मानं ख्यापय मुने प्रोक्तश्चेत्यब्रवं तदा ॥ ९२ ॥

नारद उवाच

नारदोऽस्मिनृपश्रेष्ठ स्थानकार्थीसमागतः : प्रोक्तं च देहिमेद्रव्यंभूमिंचस्थानहेतवे

यद्यपीयं देवतानां भूमिर्द्रव्यं च पार्थिव! ।

तथापि यस्मिन्यः काले राजा प्रार्थ्यः स निश्चितम् ॥ ९४ ॥

स हीश्वरस्यावतारोभर्त्तादाताऽभयस्यसः । तथैवत्वामहंयाचेद्रव्यशुद्धिपरीप्सया

पूर्वं ममाऽऽलयं देहि देयार्थे ( तथैवगालवः पूर्वं हयार्थे )प्रार्थनापरः ॥ ९६ ॥

राजोवाच

यदि त्वंनारदोविप्र राज्यमस्त्वखिलंतव । अहंहिब्राह्मणानांतेदास्यंकर्ता नसंशयः

नारद उवाच

यद्यस्माकं भवान्भक्तस्तत्ते कार्यं च नो वचः ॥ ९७ ॥

सर्वं यत्तद्देहि मे द्रव्यंमुक्तं भुवं च मे सप्तगव्यूतिमात्राम् ।

भूयात्त्वत्तोऽप्यस्य रक्षेति सोऽपि मेने त्वहंचिन्तये चाऽर्थशेषम् ॥ ६८ ॥

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे नारदार्जुनसम्वादे दानभेदप्रशंसावर्णनंनाम चतुर्थोऽध्यायः ॥

---

## पञ्चमोऽध्यायः

### नारदार्जुनसम्वादे कलापग्रामवासिसुतनुब्राह्मणेननारदप्रश्नोत्तरकथनम्

नारद उवाच

ततोऽहं धर्मवर्माणंप्रोच्यतिष्ठेद्धनंत्वयि । कृत्यकालेग्रहीष्यामीत्यागमंरैवतंगिरिम्
आसं प्रमुदितश्चाऽहं पश्यंस्तं गिरिसत्तमम् ।
आह्वयानं नरान्साधून्भूमेर्भुजमिवोच्छ्रितम् ॥ २ ॥
यस्मिन्नानाविधा वृक्षाः प्रकाशन्ते समन्ततः ।
साधुं गृहपतिं प्राप्य पुत्रभार्यादयो यथा ॥ ३ ॥
मुदितायत्रसन्तृप्तावाशन्तेकोकिलादयः । सद्गुरोर्ज्ञानसम्पन्नायथाशिष्यगणाभुवि
यत्र तप्त्वातपोमर्त्यायथेप्सितमवाप्नुयुः । श्रीमहादेवमासाद्यभक्तोयद्वन्मनोरथम्
तस्याहं च गिरेः पार्थ! समासाद्य महाशिलाम् ।
शीतसौरभ्यमन्देन प्रीणितोऽचिन्तयं हृदि ॥ ६ ॥
तावन्मया स्थानमाप्तं यदतीव सुदुर्लभम् । इदानीं ब्राह्मणार्थेऽहंकुर्वेतावदुपक्रमम्
ब्राह्मणाश्च विलोक्या मे ये हि पात्रतमा मताः ।
तथा हि चात्र श्रूयन्ते वचांसि श्रुतिवादिनाम् ॥ ८ ॥
न जलोत्तरणे शक्तायद्वन्नौःकर्णवर्जिता । तद्वच्छ्रेष्ठोऽप्यनाचारोविप्रोनोद्धरणक्षमः
ब्राह्मणोह्यनधीयानस्तृणाग्निरिवशाम्यति । तस्मैहव्यंनदातव्यंन हिभस्मनिहूयते
दानपात्रमतिक्रम्य यदपात्रे प्रदीयते । तद्वत्तंगामतिक्रम्य गर्दभस्य गवाह्निकम् ॥



ऊषरे वापितं बीजं भिन्नभाण्डे च गोदुहम् । भस्मनीवहुतंहव्यंमूर्खेदानमशाश्वतम्
विधिहीने तथाऽपात्रे योददातिप्रतिग्रहम् । न केवलंहितद्याति शेषंपुण्यं प्रणश्यति
भूरापा गौस्तथा भोगाः सुवर्णं देहमेव च ( वा ) ।
अश्वश्चक्षुस्तथावासो घृतंतेजस्तिलाः प्रजाः ॥ १४ ॥
घ्नन्ति तस्मादविद्वांस्तु बिभियाच्च प्रतिग्रहात् ।
स्वल्पकेनाप्यविद्वांस्तु पङ्के गौरिवसीदति ॥ १५ ॥
तस्माद्ये गूढतपसो गूढस्वाध्यायसाधकाः ।
स्वदारनिरताः शान्तास्तेषु दत्तं सदाऽक्षयम् ॥ १६ ॥
देशेकालउपायेन द्रव्यंश्रद्धासमन्वितम् । पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥
न विद्ययाकेवलया तपसावाऽपि पात्रता । यत्र वृत्तमिमेचोभे तद्धि पात्रम्प्रचक्षते
तेषां त्रयाणां मध्ये च विद्यामुख्यो महागुणः ।
विद्यां विनान्धवद्विप्राश्चक्षुष्मन्तो हि ते मताः ॥ १९ ॥
तस्माच्चक्षुष्मतो विद्वान्देशे देशे परीक्षयेत् ।
प्रश्नान्ये मम वक्ष्यन्ति तेभ्यो दास्यम्यहं ततः ॥ २० ॥
इति सञ्चिन्त्य मनसा तस्माद्देशात्समुत्थितः ।
आश्रमेषु महर्षीणां विचराम्यस्मि फाल्गुन !॥ २१ ॥
इमाञ्छ्लोकान्गायमानः प्रश्नरूपाञ्छृणुष्व तान् ।
मातृकां को विजानाति कतिधा कीदृशाक्षरम् ॥ २२ ॥
पञ्चपञ्चाद्भुतंगेहं को विजानातिवाद्विजः । बहुरूपांस्त्रियंकर्तुमेकरूपाञ्च वेत्ति कः
को वा चित्रकथाबन्धं वेत्ति संसारगोचरः ।
को वार्णवमहाग्राहं वेत्ति विद्यापरायणः ॥ २४ ॥
को वाऽष्टविधं ब्राह्मण्यं वेत्ति ब्राह्मणसत्तमः ।
युगानां च चतुर्णाम्वा कोमूलदिवसान्वदेत् ॥ २५ ॥
चतुर्दशमनूनां वा मूलवासरंवेत्तिकः । कस्मिश्चैवदिने प्राप पूर्वं वाभास्करोरथम्

उद्वेजयतिभूतानिकृष्णाहिरिववेत्तिकः । कोवाऽस्मिन्घोरसंसारेदक्षदक्षतमोभवेत्
पन्थानावपि द्वौ कश्चिद्वेत्ति वक्ति च ब्राह्मणः ।
इति मे द्वादशप्रश्नान्ये विदुर्ब्राह्मणोत्तमाः ॥ २८ ॥
ते मे पूज्यतमास्तेषामहमाराधकश्चिरम् । इत्यहंगायमानोवैभ्रमितःसकलांमहीम्
ते चाहुर्दुःखदाः ख्याताः प्रश्नास्ते कुर्महे नमः ।
इत्यहं सकलां पृथ्वीं विचिंत्याऽलब्धब्राह्मणः ॥ ३० ॥
हिमाद्रिशिखिरासीनो भूयश्चिन्तामवाप्तवान् ।
सर्वे विलोकिता विप्राः किमतः कर्तुमुत्सहे ॥ ३१ ॥
ततो मे चिन्तयानस्य पुनर्जाता मतिस्त्वयम् ।
अद्यापि न गतश्चाहं कलापग्राममुत्तमम् ॥ ३२ ॥
यस्मिन् विप्राः सम्वसन्ति मूर्तानीव तपांसि च ।
चतुरशीतिसाहस्राः श्रुताध्ययनशालिनः ॥ ३३ ॥
स्थाने तस्मिन् गमिष्यामीत्युक्त्वाऽहं चलितस्तदा ।
खेचरो हि ममा क्रम्य परं पारं गतस्ततः ॥ ३४ ॥
अद्राक्षं पुण्यभूमिस्थं ग्रामरत्नमहं महत् । शतयोजनविस्तीर्णंनानावृक्षसमाकुलम्
यत्र पुण्यवतांसन्तिशतशःप्रवराश्रमाः । सर्वेषामपिजीवानां यत्रान्योऽन्यंनदुष्टता
यज्ञभाजां मुनीनां यदुपकारकरं सदा ।
सतां धर्मवतां यद्वदुपकारो न शाम्यति ॥ ३७ ॥
मुनीनां यत्र परमं स्थानंचाप्यविनाशकृत् ।
स्वाहा स्वधा वषट्कारः हन्तकारो न नश्यति ॥ ३८ ॥
यत्र कृतयुगस्याऽर्थबीजं पार्थाऽवशिष्यते । सूर्यस्यसोमवंशस्यब्राह्मणानांतथैवच
स्थानकं तत्समासाद्य प्रविष्टोऽहं द्विजाश्रमान् ।
तत्र ते विविधान् वादान्विवदन्ते द्विजोत्तमाः ॥ ४० ॥
परस्परं चिन्तयाना वेदा मूर्तिधरा यथा । तत्र मेधाविनः केचिदर्थमन्यैःप्रपूरितम्



विचिक्षिपुर्महात्मानो नभोगतमिवामिषम् ।
तत्राऽहं करमुद्यम्य प्रावोचं पूर्यतां द्विजाः ॥ ४२ ॥
काकारावैः किमेतैर्वोयद्यस्ति ज्ञानशालिता ।
व्याकुरुध्वं ततः प्रश्नान् मम दुर्विषहान् बहून् ॥ ४३ ॥

ब्राह्मणा ऊचुः

वद ब्राह्मण प्रश्नान्स्वाञ्छ्रुत्वाऽऽधास्यामहे वयम् ।
परमो ह्येष नो लाभः प्रश्नान्पृच्छति यद्भवान् ॥ ४४ ॥
अहं पूर्विकया ते वै न्यषेधन्त परस्परम् । अहं पूर्वमहं पूर्वमिति वीरा यथा रणे ॥
ततस्तानब्रवं प्रश्नानहं द्वादशपूर्वकान् ।
श्रुत्वा ते मामवोचन्त लीलायन्तो मुनीश्वराः ॥ ४६ ॥
किं ते द्विज! बालप्रश्नैरमीभिः स्वल्पकैरपि ।
अस्माकं यन्निहीनं त्वं मन्यसे स ब्रवीत्वमून् ४७ ॥
ततोऽतिविस्मितश्चाऽहं मन्यमानः कृतार्थताम् ।
तेषां निहीनं सञ्चिन्त्य प्रावोचं प्रब्रवीत्वयम् ॥ ४८ ॥
ततः सुतनुनामा स बालोऽबालोऽभ्युवाच माम् ।
मम मन्दायते वाणी प्रश्नैः स्वल्पैस्तव द्विज ! ॥
तथापि वच्मि मां यस्मान्निहीनं मन्यते भवान् ॥ ४९ ॥

सुतनुरुवाच

अक्षरास्तु द्विपञ्चाशन्मातृकायाः प्रकीर्तिताः ॥ ५० ॥
ॐकारः प्रथमस्तत्र चतुर्दश स्वरास्तथा । स्पर्शाश्चैव त्रयस्त्रिंशदनुस्वारस्तथैवच
विसर्जनीयश्चपरो जिह्वामूलीय एव च । उपध्मानीयएवापिद्विपञ्चाशदमीस्मृताः
इति ते कथिता सङ्ख्या अर्थं चैषां शृणु द्विज !।
अस्मिन्नर्थे चेतिहासं तव वक्ष्यामि यः पुरा ॥ ५३ ॥
मिथिलायां प्रवृत्तोऽभूद्व ब्राह्मणस्य निवेशने ।

मिथिलायां पुरा पुर्या ब्राह्मणः कौथुमाभिधः ॥ ५४ ॥
येन विद्याः प्रपठिता वर्तन्ते भुवि या द्विज ! ।
एकत्रिंशत्सहस्राणि वर्षाणां स कृतादरः ॥ ५५ ॥
क्षणमप्यनवच्छिन्नं पठित्वा गेहवानभूत् ।
ततः केनाऽपि कालेन कौथुमस्याऽभवत्सुतः ॥ ५६ ॥
जडवद्वर्त्तमानः स मातृकां प्रत्यपद्यत । पठित्वा मातृकामन्यन्नाध्येति स कथञ्चन
ततः पिता खिन्नरूपी जडं तं समभाषत ।
अधीष्व पुत्रकाधीष्व तव दास्यामि मोदकान् ॥ ५८ ॥
अथाऽन्यस्मै प्रदास्यामि कर्णावुत्पाटयामि ते ॥ ५९ ॥

पुत्र उवाच

तात! किं मोदकार्थायपठ्यते लोभहेतवे । पठनं नाम यत्पुंसांपरमार्थंहितत्स्मृतम्

कौथुम उवाच

एवं ते वदमानस्यआयुर्भवतुब्रह्मणः । साध्वीबुद्धिरियंतेऽस्तुकुतोनाध्येष्यतःपरम्

पुत्र उवाच

तात! सर्वं परिज्ञेयं ज्ञातमत्रैव वै यतः । ततः परं कण्ठशोषः किमर्थं क्रियते वद ॥

पितोवाच

विचित्रं भाषसे बाल! ज्ञातोऽत्रार्थश्च कस्त्वया ।
ब्रूहि ब्रूहि पुनर्वत्स श्रोतुमिच्छामि ते गिरम् ॥ ६३ ॥

पुत्र उवाच

एकत्रिंशत्सहस्राणि पठित्वाऽपि त्वया पितः ! ।
नानातर्कान् भ्रान्तिरेव सन्धिता मनसि स्वके ॥ ६४ ॥
अयमयं चायमिति धर्मो यो दर्शनोदितः । तेषु वातायते चेतस्तव तन्नाशयामिते॥
उपदेशं पठस्येव नैवार्थज्ञोसितत्त्वतः । पाठमात्रा हि ये विप्रा द्विपदाःपशवोहिते
तत्ते ब्रवीमि तद्वाक्यं मोहमार्तण्डमद्भुतम् ॥ ६७ ॥



अकारः कथितो ब्रह्मा उकारो विष्णु रुच्यते ।
मकारश्च स्मृतो रुद्रस्त्रयश्चैते गुणाः स्मृताः ॥ ६८ ॥
अर्धमात्रा च या मूर्ध्नि परमः स सदाशिवः ।
एवमोङ्कारमाहात्म्यं श्रुतिरेषा सनातनी ॥ ६९ ॥
ॐकारस्य च माहात्म्यं याथात्म्येन न शक्यते ।
वर्षाणामयुतेनाऽपि ग्रन्थकोटिभिरेव वा ॥ ७० ॥
पुनर्यत्सारसर्वस्वं प्रोक्तं तच्छ्रूयतां परम् । अःकारांता अकाराद्यामनवस्तेचतुर्दश
स्वायम्भुवश्च स्वारोचिरौत्तमोरैवतस्तथा ।
तामसश्चाक्षुषः षष्ठस्तथा वैवस्वतोऽधुना ॥ ७२ ॥
सावर्णिर्ब्रह्मसावर्णो रुद्रसावर्णिरेव च । दक्षसावर्णिरेवाऽपि धर्मसावर्णिरेव च ॥
रौच्यो भौत्यस्तथा चापि मनवोऽमी चतुर्दश ।
श्वेतः पाण्डुस्तथा रक्तस्ताम्रः पीतश्च कापिलः ॥ ७४ ॥
कृष्णः श्यामस्तथा धूम्रः सुपिशङ्गः पिशङ्गकः ।
त्रिवर्णः शबलो वर्णैः कर्कन्धुर इति क्रमात् ॥ ७५ ॥
वैवस्वतः क्षकारश्च तात! कृष्णः प्रदृश्यते ।
ककाराद्याहकारान्तास्त्रयस्त्रिंशच्च देवताः ॥ ७६॥
ककाराद्याष्ठकारान्ता आदित्या द्वादशस्मृताः ।
धाता मित्रोऽर्यमा शक्रो वरुणश्चांशुरेव च ॥ ७७ ॥
भगो विवस्वान्पूषा च सवितादशमस्तथा ।
एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ॥ ७८ ॥
जघन्यजः स सर्वेषामादित्यानां गणाधिकः ।
डकाराद्या बकारान्ता रुद्राश्चैकादशैवतु ॥ ७९ ॥
कपाली पिङ्गलो भीमो विरूपाक्षो विलोहितः ।
अजकः शासनः शास्ता शम्भुश्चण्डो भवस्तथा ॥ ८० ॥

भकाराद्याः षकारान्ता अष्टौ हि वसवो मताः ।
ध्रुवो घोरश्च सोमश्च आपश्चैवानलोऽनिलः ॥ ८१ ॥
प्रत्यूषश्च प्रभासश्च अष्टौ ते वसवः स्मृताः ।
सहौचेत्यश्विनौ ख्यातौ त्रयस्त्रिंशदिमे स्मृताः ॥ ८२ ॥
अनुस्वारोविसर्गश्चजिह्वामूलीयएवच । उपध्मानीयइत्येतेजरायुजास्तथाऽण्डजाः
स्वेदजाश्चोद्भिजाश्चेति तत (पितर) जीवाः प्रकीर्तिताः ।
भावार्थः कथितश्चाऽयं तत्त्वार्थं शृणु साम्प्रतम् ॥ ८४ ॥
ये पुमांसस्त्वमून्देवान् समाश्रित्य क्रियापराः ।
अर्धमात्रात्मके नित्ये पदे लीनास्त एव हि ॥ ८५ ॥
चतुर्णां जीवयोनीनां तदैव परिमुच्यते ।
यदाभून्मनसा वाचा कर्मणा च यजेत्सुरान् ॥ ८६ ॥
यस्मिञ्छास्त्रे त्वमी देवा मानिता नैव पापिभिः ।
तच्छास्त्रं हि न मन्तव्यं यदि ब्रह्मा स्वयं वदेत् ॥ ८७ ॥
अमी च देवाः सर्वत्र श्रौते मार्गे प्रतिष्ठिताः ।
पाषण्डशास्त्रे सर्वत्र निषिद्धाः पापकर्मभिः ॥ ८८ ॥
तदमून्ये व्यतिक्रम्य तपो दानमथो जपम् । प्रकुर्वन्ति दुरात्मानो वेपन्तेमरुतःपथि
अहो मोहस्य माहात्म्यं पश्यताऽविजितात्मनाम् ।
पठन्ति मातृकां पापा मन्यन्ते न सुरानिह ॥ ९० ॥

सुतनुरुवाच

इति तस्य वचः श्रुत्वा पिताऽभूदतिविस्मितः ।
पप्रच्छ च बहून् प्रश्नान् सोप्यवादीत्तथा तथा ॥ ९१ ॥
मयाऽपि तवप्रोक्तोऽयं मातृकाप्रश्न उत्तमः । द्वितीयं शृणुतंप्रश्नंपञ्चपञ्चाद्भुतंगृहम्
पञ्चभूतानि पञ्चैव कर्म ज्ञानेन्द्रियाणि च ।
पञ्च पञ्चाऽपि विषया मनोबुद्ध्यहमेव च ॥ ९३ ॥



प्रकृतिः पुरुषश्चैव पञ्चविंशः सदाशिवः । पञ्चपञ्चभिरेतैस्तु निष्पन्नं गृहमुच्यते ॥
देहमेतदिदंवेद तत्त्वतोयात्यसौ शिवम् । बहुरूपां स्त्रियं प्राहुर्बुद्धिंवेदान्तवादिनः
सा हि नानार्थभजनान् नानारूपं प्रपद्यते ।
धर्मस्यैकस्य संयोगाद् बहुधाऽप्येकिकैव सा ॥ ९६ ॥
इति यो वेद तत्त्वार्थंनाऽसौनरकमाप्नुयात् । मुनिभिर्यच्चनप्रोक्तंयन्नमन्येतदैवतान्
वचनं तद्बुधाः प्राहुर्बन्धं चित्रकथं त्विति ।
यच्चकामान्वितं वाक्यं पञ्चमं वाप्यतः शृणु ॥ ९८ ॥
एको लोभो महान्ग्राहो लोभात्पापं प्रवर्त्तते ।
लोभात्क्रोधः प्रभवति लोभात्कामः प्रवर्त्तते ॥ ९९ ॥
लोभान्मोहश्च माया च मानः स्तम्भः परेप्सुता ।
अविद्याऽप्रज्ञता चैव सर्वं लोभात्प्रवर्त्तते ॥ १०० ॥
हरणंपरवित्तानांपरदाराभिमर्शनम् । साहसानां च सर्वेषामकार्याणांक्रियास्तथा
स लोभः सह मोहेन विजेतव्यो जितात्मना ।
दम्भो द्रोहश्च निन्दा च पैशुन्यं मत्सरस्तथा ॥ १०२ ॥
भवन्त्येतानि सर्वाणि लुब्धानामकृतात्मनाम् ।
सुमहान्त्यपि शास्त्राणि धारयन्ति बहुश्रुताः ॥ १०३ ॥
छेत्तारःसंशयानांचलोभग्रस्ताव्रजन्त्यधः ।लोभक्रोधप्रसक्ताश्चशिष्टाचारबहिष्कृताः
अन्तः क्षुरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव ।
कुर्वते ये बहून् मार्गां स्तास्तान् हेतुबलान्विताः ॥ १०५ ॥
सर्वमार्गं विलुम्पन्ति लोभाज्ज्ञातिषु निष्ठुराः ।
धर्मावतंसकाः क्षुद्रा मुष्णन्ति ध्वजिनो जगत् ॥ १०६ ॥
एतेऽति पापिनो ज्ञेया नित्यं लोभसमन्विताः ।
जनको युवनाश्वश्च बृषादर्भिः प्रसेनजित् ॥ १०७ ॥
लोभक्षयाद्दिवं प्राप्तास्तथैवान्ये जनाधिपाः ।
तस्मात्त्यजन्ति ये लोभंतेऽतिक्रामन्ति सागरम् ॥ १०८ ॥

संसाराख्यमतोऽन्यैर्ग्राहग्रस्ता न संशयः ।अथब्राह्मणभेदांस्त्वमष्टौविप्रावधारय
मात्रश्च ब्राह्मणश्चैवश्रोत्रियश्चततःपरम् । अनूचानस्तथा भ्रूण ऋषिकल्पऋषिर्मुनिः
एते ह्यष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ । तेषां परःपरः श्रेष्ठो विद्यावृत्तविशेषतः

ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत् ।
अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते ॥ ११२ ॥
एकोद्देश्यमतिक्रम्य वेदस्याऽऽचारवानृजुः।
स ब्राह्मण इति प्रोक्तो निभृतः सत्यवाग्घृणी ॥ ११३ ॥
एकां शाखां सकल्पां च षड्भिरङ्गैरधीत्य च ।
षट्कर्मणि रतो विप्र श्रोत्रियोनाम धर्मवित् ॥ ११४ ॥
वेदवेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः ।
श्रेष्ठः श्रोत्रियवान् प्राज्ञः सोऽनूचानइतिस्मृतः ॥ ११५ ॥
अनूचानगुणोपेतो यज्ञस्वाध्याययन्त्रितः ।
भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः ॥ ११६ ॥
वैदिकं लौकिकं चैव सर्वज्ञानमवाप्य यः ।
आश्रमस्थोवशीनित्यमृषिकल्पइति स्मृतः ॥ ११७ ॥

ऊर्ध्वरेता भवत्यग्र्योनियताशीन संशयी । शापानुग्रहयोः शक्तःसत्यसंधोभवेदृषिः

निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः ।
ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः ॥ ११९ ॥
एवमन्वयविद्याभ्यां वृत्तेन च समुच्छ्रिताः ।
त्रिशुक्लानाम विप्रेन्द्राः पूज्यन्ते सवनादिषु ॥ १२० ॥

इत्येवंविधविप्रत्वमुक्तं शृणु युगादयः । नवमी कार्तिकेशुक्ला कृतादिः परिकीर्तिता

वैशाखस्य तृतीया या शुक्ला त्रेतादिरुच्यते ।
माघे पञ्चदशीनाम द्वापरादिः स्मृता बुधैः॥ १२२ ॥
त्रयोदशी नभस्ये च कृष्णा सा हि कलेः स्मृता ।



युगादयः स्मृता ह्येता दत्तस्या क्षयकारकाः ॥ १२३ ॥
एताश्चतस्रस्तिथयो युगाद्या दत्तं हुतं चाऽक्षयमाशु विद्यात् ।
युगे युगे वर्षशतेन दानं युगादिकाले दिवसेन तत्फलम् ॥
युगाद्याः कथिता ह्येता मन्वाद्याः शृणु साम्प्रतम् ।
अश्वयुक्छुक्लनवमी द्वादशी कार्तिके तथा ॥ १२५ ॥
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ।
फाल्गुनस्य त्वमावस्या पौषस्यैकादशी तथा ॥ १२६ ॥
आषाढस्याऽपि दशमी माघमासस्य सप्तमी ।
श्रावणस्याऽष्टमी कृष्णा तथाषाढी च पूर्णिमा ॥ १२७॥

कार्तिकीफाल्गुनीचैत्रीज्यैष्ठेपञ्चदशीसिता ।मन्वन्तरादयश्चैतादत्तस्याक्षयकारकाः

यस्यां तिथौ रथं पूर्वं प्राप देवो दिवाकरः ।
सा तिथिःकथिता विप्रैर्माघे या रथसप्तमी ॥ १२९ ॥
तस्यां दत्तं हुतं चेष्टं सर्वमेवाऽक्षयं मतम् ।
सर्वदारिद्र्यशमनं भास्करप्रीतये मतम् ॥ १३० ॥
नित्योद्वेजक माहुर्यं बुधास्तं शृणु तत्त्वतः ।
यश्च याचनिको नित्यं न स स्वर्गस्य भाजनम् ॥ १३१ ॥
उद्वेजयति भूतानि यथा चौरास्तथैव सः ।
नरकं याति पापात्मा नित्योद्वेगकरस्त्वसौ ॥ १३२ ॥
इहोपपत्तिर्मम केन कर्मणा क्व च प्रयातव्यमितो मयेति ।
विचार्य चैवं प्रतिकारकारी बुधैः स चोक्तो द्विज ! दक्षदक्षः ॥ १३३ ॥

मासैरष्टभिरह्ना च पूर्वेण वयसाऽऽयुषा । तत्कर्म पुरुषः कुर्याद्येनान्तेसुखमेधते ॥

अर्चिर्धूमश्च मार्गौ द्वावाहुर्वेदान्तवादिनः ।
अर्चिषा याति मोक्षश्च धूमेनाऽऽवर्तते पुनः ॥ १३५ ॥
यज्ञैरासाद्यते धूमो नैष्कर्म्येणार्चिराप्यते ।

एतयोरपरो मार्गः पाखण्ड इति कीर्त्यते ॥ १३६ ॥
यो देवान्मन्यते नैव धर्मांश्च मनुसूचितान् ।
नैतौ सयाति पन्थानौ तत्त्वार्थोऽयं निरूपितः ॥ १३७ ॥
इति ते कीर्तिताः प्रश्नाः शक्त्या ब्राह्मणसत्तम !।
साधुवाऽसाधुवा ब्रूहि ख्यापयाऽऽत्मनमेव च ॥ १३८ ॥
इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यांसंहितायांप्रथमेमाहेश्वरखण्डे कौमारिकाखण्डे कलापग्रामवासिसुतनुब्राह्मणेन नारदप्रश्नोत्तरकथनंनाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः

### नारदद्वारा पृथ्वीसङ्गमतीर्थे ब्राह्मणानां प्रस्थापनं तत्र स्थानप्रतिष्ठावर्णनञ्च

श्री नारद उवाच

इतिश्रुत्वा फाल्गुनाऽहं रोमाञ्चपुलकीकृतः । स्वरूपंप्रकटीकृत्यब्राह्मणानिदमब्रवम्
अहो धन्यः पिताऽस्माकं यस्य सृष्टस्य पालकाः ।
युष्मद्विधा ब्राह्मणेन्द्राः सत्यमाह पुरा हरिः ॥ २ ॥
मत्तोऽप्यनन्तात्परतः परस्मात्समस्तभूताधिपतेर्न किञ्चित् ।
तेषां किमु स्यादितरेण येषां द्विजेश्वराणां मम मार्गवादिनाम् ॥ ३ ॥
तत्सर्वथाऽद्य धन्योऽस्मि सम्प्राप्तं जन्मनः फलम् ।
यद्भवन्तो मया दृष्टाः पापोपद्रववर्जिताः ॥ ४ ॥
ततस्ते सहसोत्थाय शातातपपुरोगमाः ।
अर्घ्यपाद्यादिसत्कारैः पूजयामासुर्मां द्विजाः ॥ ५ ॥
प्रोक्तवन्तश्चमांपार्थवचःसाधुजनोचितम् । धन्यावयं हिदेवर्षेत्वमस्मान्यदिहागतः



कुतो वाऽऽगमनं तुभ्यं गन्तव्यंवा क्वसाम्प्रतम् ।
अत्राप्यागमने कार्यमुच्यतां मुनिसत्तम !॥ ७ ॥
श्रुत्वाप्रीतिकरं वाक्यं द्विजानामितिपाण्डव !।
प्रत्यवोचं मुनीन्द्रांस्ताञ्छ्रूयतांद्विजसत्तमाः ॥ ८ ॥
अहं हि ब्रह्मणो वाक्याद्विप्राणां स्थानकं शुभम् ।
दातुकामो महातीर्थे महीसागरसङ्गमे ॥ ९ ॥
परीक्षन्ब्राह्मणानत्र प्राप्तो यूयं परीक्षिताः ।
अहंवःस्थापयिष्यामि चानुजानीत तद्द्विजाः ॥ १० ॥
एवमुक्तो विलोक्यैव द्विजाञ्छातातपोऽब्रवीत् ।
देवानामपि दुष्प्राप्यं सत्यं नारद! भारत !॥ ११ ॥
किं पुनश्चापि तत्रैव महीसागरसङ्गमः । यत्र स्नातो महातीर्थफलं सर्वमुपाश्नुते ॥
पुनरेको महान्दोषोबिभीमोनितरांयतः । तत्रचौराःसुबहवोनिर्घृणाःप्रियसाहसाः
स्पर्शेषु षोडशं चैकविंशंगृह्णन्तिनोधनम् । धनेन तेन हीनानां कीदृशं जन्मनोभवेत
वरं बुभुक्षया वासो मा चौरकरगा(वशगाः)वयम् ।

अर्जुन उवाच

अद्भुतं वर्ण्यते विप्र! के हि चौराः प्रकीर्तिताः ॥ १५ ॥
किं धनं च हरन्त्येते येभ्यो बिभ्यति ब्राह्मणाः ।

नारद उवाच

कामक्रोधादयश्चौरास्तप एव धनं तथा ॥ १६ ॥
तस्यापहारभीतास्ते मामूचुरिति ब्राह्मणाः ।
तानहं प्राब्रवं पश्चाद्विजानीत द्विजोत्तमाः ॥ १७ ॥
जाग्रतां तु मनुष्याणां चौराःकुर्वन्ति किं खलाः ।
भयभीतश्चालसश्च तथाचाऽशुचिरेव यः ॥ १८ ॥
तेन किं नाम संसाध्यं भूमिस्तं ग्रसते नरम् ॥ १९ ॥

एतस्मिन्नन्तरे देवो वरुणः पाशभृद्वृतः ।
पाशेन दानवेन्द्रस्य बबन्धाऽऽशु भुजद्वयम् ॥ ६० ॥
ततो बद्धभुजंदैत्यं विफलीकृतपौरुषम् । ताडयामास गदया दयामुत्सृज्यपाशभृत्
स तु तेन प्रहारेण स्रोतोभिः क्षतजं स्रवन् । दधारकालमेवस्यरूपंविद्युल्लताभृतम्
तदवस्थागतं दृष्ट्वाकुजम्भंमहिषासुरः । व्यावृत्तवदनारावो भोक्तुमैच्छत्सुरावुभौ
निर्ऋतिं वरुणं चैव तीक्ष्णदंष्ट्रोत्कटाननः ।
तावभिप्रायमालोक्य तस्य दैत्यस्य दूषितम् ॥ ६४ ॥
त्यक्त्वा रथावुभौ भीतौ तौ पदाती प्रद्रुतौ द्रुतम् ।
जग्मतुर्महिषाद्भीतौ शरणं पाकशासनम् ॥ ६५ ॥
क्रुद्धोऽथ महिषोदैत्योवरुणंसमुपाद्रवत् । तमन्तकमुखासन्नमालोक्यहिमदीधितिः
चक्रे शस्त्रं विसृष्टं हि हिमसङ्घातमुल्बणम्
वायव्यं चाऽस्त्रमतुलं चन्द्रश्चक्रे द्वितीयकम् ॥ ६७ ॥
वायुना तेन चण्डेन संशुष्केण हिमेन च । महाहिमनिपातेन शस्त्रैश्चन्द्रप्रणोदितैः
गात्राण्यसुरसैन्यानामदह्यन्त समन्ततः ।
व्यथिता दानवाः सर्वे शीतच्छादितपौरुषाः ॥ ६६ ॥
नशेकुश्चलितुंतत्रनाऽस्त्राण्यादातुमेव च । महिषोनिष्प्रयत्नश्चशीतेनाकम्पिताननः
अंसमालिङ्ग्यपाणिभ्यामुपविष्टोह्यधोमुखः ।
सर्वे ते निष्प्रतीकारा दैत्याश्चन्द्रमसाजिताः ॥ ७१ ॥
रणेच्छां दूरतस्त्यक्त्वा तस्तस्ते जीवितार्थिनः ।
तत्राऽब्रवीत्कालनेमिर्दैत्यान्क्रोधाविदीपितः ॥ ७२ ॥
भोभोः शृङ्गारिणः क्रूराः सर्वशस्त्रास्त्रपारगाः ।
एकैकोऽपि जगत्कृत्स्नं शक्तस्तुलयितुं भुजैः ॥ ७३ ॥
एकैकोऽपि क्षमोग्रस्तुं जगत्सर्वं चराचरम् ।
एकैकस्याऽपि पर्याप्ता न सर्वेऽपि दिवौकसः ॥ ७४ ॥



कित्रस्तनयनाश्चैवसमरेपरिनिर्जिताः । न युक्तमेतच्छूराणांविशेषाद्दैत्यजन्मनाम्
राज्ञश्च तारकस्याऽपि दर्शयिष्यथ किं मुखम् ।
विरतानां रणाच्चाऽसौ क्रुद्धःप्राणान्हरिष्यति ॥ ७६ ॥
इतितेप्रोच्यमानाऽपि नोचुः किञ्चिन्महासुराः । शीतेननष्टश्रुतयोभ्रष्टवाक्याश्चतेतथा
मूकास्तथाऽभवन्दैत्या मृतकल्पा महारणे ।
तान्दृष्ट्वा नष्टचेतस्कान्दैत्याञ्छीतेन पीडितान् ॥ ७८ ॥
मत्वाकालक्षमंकार्यंकालनेमिर्महासुरः । आश्रित्यमानवींमायांवितत्यचमहावपुः
पूरयामास गगनं दिशोविदिशएवच । निर्ममे दानवेन्द्रोऽसौ शरीरेभास्करायुतम्
दिशश्च विदिशश्चैव पूरयामास पावकैः ।
ततो ज्वालाकुलं सर्वं त्रैलोक्यमभवत् क्षणात् ॥ ८१ ॥
तेन ज्वालासमूहेन हिमांशुरगमद्द्रुतम् । ततः क्रमेण विभ्रष्टं शीतदुर्दिनमाबभौ
तद्बलं दानवेन्द्राणां मायया कालनेमिनः ।
तद्दृष्ट्वा दानवानीकं लब्धसञ्ज्ञं दिवाकरः ॥
उवाचाऽरुणमत्यर्थं कोपरक्तान्तलोचनः ॥ ८३ ॥
दिवाकर उवाच
नयाऽरुण ! रथं शीघ्रं कालनेमिरथो यतः ॥ ८४ ॥
विमर्दे तत्र विषमे भविता भूतसङ्क्षयः । जितएषशशाङ्कोऽथवयंयद्बलमाश्रिताः
इत्युक्तश्चोदयामास रथं गरुडपूर्वजः । रथे स्थितोऽपितैरश्वैःसितचामरधारिभिः
जगद्दीपोऽथ भगवाञ्जग्राह विततं धनुः ।
शरौघो वै पाण्डुपुत्र ! क्षिप्रमासीद् विषद्युतिः ॥ ८७ ॥
शम्बरास्त्रेण सन्धाय बाणमेकं ससर्ज ह ।
द्वितीयं चेन्द्रजालेनाऽऽयोजितं प्रमुमोच ह ॥ ८८ ॥
शम्बरास्त्रं क्षणाच्चक्रे तेषां रूपविपर्ययम् ।
देवानां दानवं रूपं दानवानां च दैविकम् ॥ ८९ ॥

मत्वासुरान्स्वकानेवजघ्नेघोरास्त्रलाघवात् । कालनेमिरुषाविष्टःकृतान्तइवसंक्षये

कांश्चित्खड्गेन तीक्ष्णेन कांश्चिन्नाराचवृष्टिभिः ।

कांश्चिद्गदाभिर्घोराभिः कांश्चिद्घोरैः परश्वधैः ॥ ६१ ॥

शिरांसि केषाश्चिदपातयद्रथाद्भुजांस्तथा सारथींश्चोग्रवेगवान् ।

कांश्चित्पिपेषाऽथ रथस्य वेगात्कांश्चित्तथाऽत्यद्भुतमुष्टिपातैः ॥ ६२ ॥

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे तारकसैन्यदेवसैन्ययोर्युद्धवर्णनं नामाष्टदशोऽध्यायः ॥ १८ ॥

---

# एकोनविंशोऽध्यायः

## देवासुरसङ्ग्रामे कालनेमिकृतयुद्धसम्मर्दे विष्णुनासहकालनेमियुद्धवर्णनम्

नारद उवाच

कालनेमीरुषाविष्टस्तेषां रूपं न बुद्धवान् । ततो निमिश्चदैत्येन्द्रंमत्वादेवंमहाजवः केशेषु गृह्य तं वीरं चकर्ष च ननाद च । ततो निमिरुवाचेदं कालनेमिं महाबलम्

अहं निमिः कालनेमे सुतं मत्वा वधस्व मा ।

भवता मोहितेनाजौ देवान्मत्वा सुराः स्वकाः ॥ ३ ॥

सुरैः सुदुर्जयाः कोट्यो निहता दश विद्धि तत् ।

सर्वास्त्रवारणं मुञ्च ब्राह्ममस्त्रं त्वरान्वितः ॥ ४ ॥

स तेन बोधितो दैत्यो मुक्त्वा तं सम्भ्रमाकुलः ।

बाणं ब्रह्मास्त्रविहितं मुमोच त्वरयान्वितः ॥ ५ ॥

ब्रह्मास्त्रंतत्प्रजज्वाल ततः खे सुमहाद्भुतम् । देवानांचाभवत्सैन्यंसर्वमेवभयाकुलम् शम्बरास्त्रंततःशान्तंब्राह्मप्रतिहतं तदा । तस्मिन्प्रतिहतेह्यस्त्रेसंक्रुद्धोभास्करःप्रभुः

महेन्द्रजालमास्थाय चक्रे स्वां भीषणां तनुम् ।



विस्फूर्जत्करसङ्घातसमाक्रान्तजगत्त्रयः ॥ ८ ॥

ततापदानवानीकं गलन्मज्जाङ्घ्रिशोणितम् ।

चक्षूंषि दानवेन्द्राणां चकाराऽन्धानि सप्रभुः ॥ ९ ॥

गजानामगलन्मेदः पेतुश्चाऽपि रथा भुवि ।

तुरङ्गमाः श्वसन्तश्चघर्मार्ता रथिनोऽपि च ॥ १० ॥

इतश्चेतश्च सलिलं प्रार्थयन्तस्तृषातुराः । गिरिद्रोणीश्चपादांश्चगिरिणांगहनानिच

तेषां प्रार्थयतां शीघ्रमन्योन्यं च विसर्पिणाम् ।

दावाग्निरज्वलत्तीव्रो घोरो निर्दग्धपादपः ॥ १२ ॥

तोयार्थिनः पुरो दृष्ट्वा तोयं कल्लोलमालिनम् ।

पुरः स्थितमपि प्राप्तुं न शेकुरुपसादितुम् ॥ १३ ॥

अप्राप्य सलिलं भूमावभ्याशे द्रुतमेव ते । तत्रतत्र व्यदृश्यन्त मृतादैत्येश्वरा भुवि

रथा गजाश्चपतितास्तुरङ्गाश्च श्रमान्विताः ।

स्थिता वमन्तो धावन्तो गलद्द्रुतवसास्रजः ॥ १५ ॥

दानवानां कोटिकोटि व्यदृश्यत मृतं तदा ।

एवं क्षयो दानवानां तस्मिन् महति वर्तिते ॥ १६ ॥

प्रकोपोद्भूतताम्राक्षः कालनेमी रुषातुरः । बभूव कालमेघाभः स्फुरद्रोमशतह्रदः गम्भीरास्फोटनिर्ह्रादजगद्धृदयकम्पनः । प्रच्छाद्य गगनं सूर्यप्रभांसर्वां व्यनाशयत्

ववर्ष शीतं च जलं दानवेन्द्रबलं प्रति ।

दैत्यास्तां वृष्टिमासाद्य समाश्वस्तास्ततः क्रमात् ॥ १९ ॥

बीजाङ्कुरा इव म्लानाः प्राप्य वृष्टिं धरातले । ततः समेघरूपेणकालनेमिर्महासुरः

शस्त्रवृष्टिं ववर्षोग्रां देवानीकेषु दुर्जयः ।

तया वृष्ट्या पीड्यमाना दैत्यैरन्यैश्च देवताः ॥ २१ ॥

रतिं काञ्चिन्न पश्यन्ति गावः शीतार्दिता इव । परस्परं व्यलीयन्तगजेषु तुरगेषुच्च

रथेषु च भयत्रस्तास्तत्रतत्र निलिल्यिरे ॥ २२ ॥

एवं ते लीयमानाश्च निहताः कालनेमिना ।
दृश्यन्ते पतिता देवाः शस्त्रभिन्नाङ्गसन्धयः ॥ २३ ॥
विभिन्नाभिन्नमूर्धानस्तथाभिन्नोरुजानवः ।विपर्यस्तंरथाङ्गैश्चपतितंध्वजशक्तिभिः
तुरङ्गानां सहस्राणि गजानामयुतानि च । रक्तेनतेषांघोरेणदुस्तराचाऽभवन्मही
एवमाजौ महादैत्यः कालनेमिर्महासुरः । जघ्ने मुहूर्तमात्रेण गन्धर्वाणांदशायुतम्
यक्षाणां पञ्चलक्षाणि किन्नराणां तथैव च ।
जघ्ने पिशाचमुख्यानां सप्तलक्षाणि निर्भयः ॥ २७ ॥
इतरेषां न संख्याऽस्ति सुरजातिनिकायिनाम् ।
जघ्ने स कोटिशः क्रुद्धः कालनेमिर्मदोत्कटः ॥ २८ ॥
एवं प्रतिभयेभीमेतदाऽमरमहाक्षये । संक्रुद्धावश्विनौवीरौ चित्रास्त्रकवचोज्ज्वले
जघ्नतुस्तौरणे दैत्यमेकैकंषष्टिभिः शरैः । निर्भिद्य ते महादैत्यंसपुङ्खाविविशुर्महीम्
ताभ्यां बाणप्रहारैस्तु किञ्चित्सोऽवाप्तचेतनः ।
जग्राह चक्रं लक्षारं तैलधौतं रणेऽधिकम् ॥ ३१ ॥
तेन चक्रेण सोऽश्विभ्यां चिच्छेद रथकूबरम् ।
जग्राहाऽथ धनुर्दैत्यः शरांश्चाशीविषोपमान् ॥ ३२ ॥
ववर्ष भिषजोर्मूर्ध्नि संच्छाद्याकाशगोचरम् ।
तावप्यस्त्रैः स्मृतैः सर्वाश्छेदतुर्दैत्यसायकान् ॥ ३३ ॥
तच्च कर्म तयोर्दृष्ट्वा विस्मितः कोपमाविशत् ।
जग्राह मुद्गरं भीमं कालदण्डविभीषणम् ॥ ३४ ॥
स तमुद्भ्राम्य वेगेन चिक्षेपाऽस्य रथं प्रति ।
तं तु मुद्गरमायान्तमालोक्याम्बरगोचरे ॥ ३५ ॥
मुक्त्वा रथावुभौ वेगादाप्लुतौ तरसाऽश्विनौ ।
तौ रथौ स तु निष्पिष्य मुद्गरोऽचलसन्निभः ॥ ३६ ॥
दारयामास धरणीं हेमजालपरिष्कृतः ।



तस्य कर्माऽथ तद्दृष्ट्वा भिषजौ चित्रयोधिनौ ॥ ३७ ॥
चक्रास्त्रं च प्रकुर्वाणौ दानवेन्द्रमयुध्यताम् । घोरवज्रप्रहारैस्तुदानवः सपरिक्षतः
रथो ध्वजो धनुश्चैव छत्रं च कवचं तथा । क्षणेन शतधा भूतं सर्वसैन्यस्यपश्यतः
तद्दृष्ट्वा दुष्करं कर्म सोऽश्विभ्यां भीमविक्रमः ।
नारायणास्त्रं बलवान् मुमोच रणमूर्धनि ॥ ४० ॥
तत शशाम चक्रास्त्रं कालनेमिस्ततो रुषा । जीवग्राहंग्राहयितुमश्विनौतौप्रचक्रमे
तावभिप्रायमालक्ष्य सन्त्यज्य समराङ्गणम् ।
पदाती वेपमानाङ्गौ प्रद्रुतौ वासवो यतः ॥ ४२ ॥
तयोरनुगतो दैत्यः कालनेमिर्नदन्मुहुः । प्राप्येन्द्रस्य बलं क्रूरो दैत्यानीकपदानुगः
स काल इव कल्पान्ते यदा वासवमाद्रुतः ।
तं दृष्ट्वा सर्वभूतानि विविशुर्विह्वलानि तु ॥ ४४ ॥
हाहारावं प्रकुर्वाणास्तदा देवाश्च मेनिरे । पराजयं महेन्द्रस्य सर्वलोकक्षयावहम्
चेलुः शिखरिणो मुख्याः पेतुरुल्का नभस्तलात् ।
जगर्जुर्जलदा दिक्षु सम्भूतश्च महारवः ॥ ४६ ॥
तां भूतविकृतिं दृष्ट्वा देवाः सेन्द्रा भयावहाः ।
मनसा शरणं जग्मुर्वासुदेवं जगत्पतिम् ॥ ४७ ॥
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धितायकृष्णायगोविन्दायनमोनमः
स नो रक्षतु गोविन्दो भयार्तास्ते जगुःसुराः ।
सुराणां चिन्तितं ज्ञात्वा भगवान् गरुडध्वजः ॥ ४९ ॥
विबुध्यैव च पर्यङ्काद्योगनिद्रां विहाय सः ।
लक्ष्मीकरयुगाम्भोज लालिताङ्घ्रि सरोरुहः ॥ ५० ॥
शारदाम्बरनीलाब्जकान्तिदेहच्छविः प्रभुः ।
कौस्तुभोद्भासिहृदयः कान्तकेयूरभास्करः ॥ ५१ ॥
विमृश्यसुरसंक्षोभंवैनतेयमथाऽऽह्वयत् । आहूतेऽवस्थितेतस्मिन्गरुडेदुःखितेभृशम्

दिव्यनानास्त्रतीक्ष्णार्चिरारुह्याऽगात्सुरावहम् ।
तत्राऽपश्यत दैत्येन्द्रं भयभीतमभिद्रुतम् ॥ ५३ ॥
दानवेन्द्रैर्नवाम्भोदसच्छायैःसर्वथोत्कटैः । यथाहिपुरुषंघोरैरभाग्यैरर्थकाङ्क्षिभिः
तत्त्राणायाऽव्रजद्विष्णुः स्तूयमानो मुहुः सुरैः ।
अभाग्येभ्यः परित्रातुं सुकृतं निर्मलं यथा ॥ ५५ ॥
अथाऽपश्यत दैत्येन्द्रो वियति द्युतिमण्डलम् ।
स्फुरन् तमुदयाच्छीघ्रं कान्तं सूर्यशतं यथा ॥ ५६ ॥
प्रभवंज्ञातुमिच्छन्तोदानवास्तस्यतेजसः । गरुडं तमथापश्यन्कल्पान्तानलभैरवम्
तत्र स्थितं चतुर्बाहुं हरिं चानुपमद्युतिम् ।
तमालोक्यासुरेन्द्रास्तु हर्षसम्पूर्णमानसाः ॥ ५८ ॥
अयं सदेवःसर्वेषां शरणंकेशवोऽरिहा । अस्मिञ्जिते जिताःसर्वादेवतानाऽत्रसंशयः
एनमाश्रित्य लोकेशा यज्ञभागभुजोऽमराः ।
इत्युक्त्वा ते समागम्य सर्वएव ततस्ततः ॥ ६० ॥
तं जघ्नुर्विविधैःशस्त्रैः परिवार्य समन्ततः । कालनेमिप्रमृतयो दश दैत्यमहारथाः
षष्ट्या विव्याध बाणानां कालनेमिर्जनार्दनम् ।
निमिःशतेन बाणानां मथनोऽशीतिभिः शरैः ॥ ६२ ॥
जम्भकश्चैव सप्तत्या शुम्भो दशभिरेव च । शेषादैत्येश्वराःसर्वे विष्णुमेकैकशःशरैः
दशभिर्दशभिः शल्यैर्जघ्नुः सगरुडं रणे । तेषाममृष्यत्तत्कर्म विष्णुर्दानवसूदनः
एकैकं दानवं जघ्ने षड्भिः षड्भिरजिह्मगैः ।
आकर्णकृष्टैर्भूयश्च कालनेमिस्त्रिभिःशरैः ॥ ६५ ॥
विष्णुं विव्याधहृदयेरोषाद्रक्तविलोचनः ।तस्याऽशोभन्ततेबाणाहृदयेतप्तकाञ्चनाः
मयूखा इव सन्दीप्ताःकौस्तुभस्य स्फुरत्त्विषः ।
तैर्बाणैः किञ्चिदायस्तोहरिर्जग्राह मुद्गरम् ॥ ६७ ॥
स तमुद्ग्राह्य वेगेन दानवाय मुमोच वै । दानवेन्द्रस्तमप्राप्तं वियत्येव शतैः शरैः



चिच्छेद तिलशः क्रुद्धो दर्शयन्पाणिलाघवम् ।
ततो विष्णुःप्रकुपितःप्रासं जग्राह भैरवम् ॥ ६९ ॥
तेन दैत्यस्य हृदयं ताडयामास वेगतः ।
क्षणेन लब्धसञ्ज्ञस्तु कालनेमिर्महासुरः ॥ ७० ॥
शक्तिं जग्राह तीक्ष्णाग्रां हेमघण्टाट्टहासिनीम् ।
तया वामं भुजं विष्णोर्बिभेद दितिनन्दनः ॥ ७१ ॥
भिन्नं शक्त्या भुजं तस्य स्रतशोणितमाबभौ ।
नीले बलाहके विद्युद्विद्योतन्ती यथा मुहुः ॥ ७२ ॥
ततो विष्णुः प्रकुपितो जग्राह विपुलंधनुः ।
सप्तदश च नाराचांस्तीक्ष्णाग्रान्मर्मभेदिनः ॥ ७३ ॥
दैत्यस्य हृदयं षड्भिर्विव्याधचशरैस्त्रिभिः ।
चतुर्भिः सारथिंचास्यध्वजंचैकेनपत्रिणा ॥ ७४ ॥
द्वाभ्यां धनुर्ज्याधनुषी भुजं चैकेन पत्रिणा । सविद्धोहृदयेगाढं दोर्भ्यांमूढोयथानरः
स्रुतरक्तारुणः प्रांशुः पीडाचलितमानसः ।
चकम्पे मारुतेनेव चोदितः किंशुकद्रुमः ॥ ७६ ॥
ततः कम्पितमालक्ष्य गदां जग्राह केशवः । तां च वेगेन चिक्षेपकालनेमिवधंप्रति
सा पपात शिरस्युग्रा सहसा कालनेमिनः ।
सञ्चूर्णितोत्तमाङ्गस्तु निष्पिष्टमुकुटोऽसुरः ॥ ७८ ॥
स्रुतरक्तौघरन्ध्रश्चस्रुतधातुरिवाऽचलः । पपात स्वे रथे भग्नो विसञ्ज्ञःशिष्टजीवनः
पतितस्य रथोपस्थे दानवस्याऽच्युतोऽरिहा ।
स्मितपूर्वमुवाचेदं वाक्यं चक्रायुधःप्रभुः ॥ ८० ॥
गच्छाऽसुर! विमुक्तोऽसि साम्प्रतं जीवनिर्वृतः ।
ततः स्वल्पेनकालेनअहमेवतवाऽन्तकः ॥ ८१ ॥
एवं वचस्तस्य निशम्य विष्णोः सर्वेश्वरस्याऽथ रथं निमेषात् ।

निनाय दूरं किल कालनेमिनो भीतस्तदासारथिर्लोकनाथात् ॥ ८२ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमेमाहेश्वखण्डे कौमारिकाखण्डे देवासुरसङ्ग्रामे कालनेमिकृतयुद्धसम्मर्देविष्णुना सह कालनेमियुद्धवर्णनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः

### दैत्यैःसह विष्णोर्युद्धवर्णनम्

नारद उवाच

तं दृष्ट्वा दानवाः सर्वे क्रुद्धाःस्वैःस्वैर्बलैर्वृताः ।
सरघा इव माध्वीकं रुरुधुःसर्वतस्ततः ॥ १ ॥
पर्वताभे गजे भीमे मदस्राविणि दुर्दमे । सितचित्रपताके तु प्रभिन्नकरटामुखे ॥
स्वर्णवर्णाश्रितेयद्वन्नगेदावाग्निसम्वृते ।आरुह्याऽऽजौनिमिर्दैत्योहरिंप्रत्युद्ययौबली
तस्याऽऽसन्दानवारौद्रा गजस्यपरिरक्षिणः ।
सप्तविंशतिकोट्यश्चकिरीटकवचोज्ज्वलाः ॥ ४ ॥
अश्वमारुह्य शैलाभं मथनो हरिमाद्रवत् । पञ्चयोजनप्रग्रीवमुष्ट्रमास्थाय जम्भकः
शुम्भो मेषं समारूह्याऽव्रजद्द्वादशयोजनम् ।
अपरे दानवेन्द्राश्चयत्तानानास्त्रपाणयः ॥ ६ ॥
आजग्मुःसमरेक्रुद्धाविष्णुमक्लिष्टकारिणम् । परिघेणनिमिर्दैत्योमथनो मुद्गरेणच
शुम्भः शूलेन तीक्ष्णेनप्रासेनग्रसनस्तथा । चक्रेण क्रथनःक्रुद्धोजम्भःशक्त्यामहारणे
जघ्नुर्नारायणं शेषा विशिखैर्मर्मभेदिभिः ।
तान्यस्त्राणिप्रयुक्तानिविविशुः पुरुषोत्तमम् ॥ ९ ॥
उपदेशागुरोर्यद्वत्सच्छिष्यंवहुधेरिताः । ततः क्रुद्धो हरिर्गृह्यधनुर्वाणांश्चपुष्कलान्



ममर्द दैत्यसेनां तद्धर्ममर्मथवचो यथा । निमिं विव्याध विंशत्या बाणैरनलवर्चसैः
मथनंदशभिश्चैव शुम्भं पञ्चभिरेव च । शतेन महिषं क्रुद्धो विव्याधोरसिमाधवः ॥
जम्भं द्वादशभिस्तीक्ष्णैः सर्वांश्चैकैकशोऽष्टभिः ।
तस्य तल्लाघवं दृष्ट्वादानवाः क्रोधमूर्च्छिताः ॥ १३ ॥
चक्रुर्गाढतरं यत्नमावृण्वानाहरिंशरैः । चिच्छेदाऽथधनुर्ज्यां चनिमिर्भल्लेनदानवः
हस्ताच्चापं च संरम्भाच्चिच्छेद महिषासुरः ।
पीडयामास गरुडं जम्भो बाणायुतैस्त्रिभिः ॥ १५ ॥
भुजावस्य च विव्याध शुम्भो बाणायुतेन वै ।
ततो विस्मितचित्तस्तु गदां जग्राह माधवः ॥ १६ ॥
तां प्राहिणोत्स वेगेन मथनाय महाहवे ।
तामप्राप्तां निमिर्बाणैर्मुशलाभैः सहस्रशः ॥ १७ ॥
आहत्य पातयामासविनदन्कालमेघवत् । ततोऽन्तरिक्षेहाहेतिभूतानांजज्ञिरेकथाः
नैतदस्तिबलंव्यक्तं यत्राऽशीर्यत सा गदा ।
तां हरिःपतितां दृष्ट्वा अस्थाने प्रार्थनामिव ॥ १९ ॥
जग्राह मुद्गरंघोरं दिव्यरत्नपरिष्कृतम् । तंमुमोचाऽतिवेगेन निमिमुद्दिश्यदानवम्
तमायान्तंवियत्येव त्रयोदैत्या व्यवारयन् । गदया जम्भदैत्यस्तुग्रसनः पट्टिशेन तु
शक्त्या च महिषोदैत्यो विनदन्तोमहारवम् ।
निराकृतं तमालोक्य दुर्जनैः सुजनं यथा ॥ २२ ॥
जग्राह शक्तिमुग्राग्रां शतघण्टामहास्वनाम् ।
जम्भाय तां समुद्दिश्य प्राहिणोद्भीषणे रणे ॥ २३ ॥
आयान्तीमथालोक्य जम्भोऽन्यस्य रथात्त्वरात् ।
आप्लुत्य लीलया गृह्णन्कामिनीं कामुको यथा ॥ २४ ॥
तथैवगरुडं [illegible] रथं प्राप्य धनुर्गृह्याऽभ्ययोजयत्
चित्रेताश्चाऽभवद्युद्धे गरुडः शक्तिपीडितः ।

ततः प्रहस्यतं विष्णुः साधुसाध्विति भारत ! ॥ २६ ॥
करस्पर्शेन कृतवान्विमोहं विनतात्मजम् ।
समाश्वास्यचतं वाग्भिः शक्तिं दृष्ट्वा च निष्फलाम् ॥ २७ ॥
कुभार्यस्य यथा पुंसः सर्वं स्याच्चिन्तितं वृथा ।
दृढसारमहामौर्वीमन्यां संयोजयत्ततः ॥ २८ ॥

कृत्वा च तिलनिर्घोषंरौद्रमस्त्रंमुमोच सः । ततोऽस्त्रतेजसासर्वमाकाशं नैव दृश्यते

भूमिर्दिशश्च विदिशो बाणजालमया बभुः ।
दृष्ट्वा तदस्त्रमाहात्म्यं सेनानीर्ग्रसनोऽसुरः ॥ ३० ॥
ब्राह्ममस्त्रं चकाराशु सर्वास्त्रविनिवारणम् ।
तेनतत्प्रशमं यातं रौद्रास्त्रं लोकभीषणम् ॥ ३१ ॥

अस्त्रे प्रतिहते तस्मिन्वष्णुर्दानवसूदनः । कालदण्डास्त्रमकरोत्सर्वलोकभयङ्करम्

सन्धीयमानेऽस्त्रे तस्मिन्मारुतः परुषोववौ ।
चकम्पे च महीदेवी भिन्नाश्चाम्बुधयोऽभवन् ॥ ३३ ॥

तदस्त्रमुग्रं दृष्ट्वातुदानवायुद्धदुर्मदाः । चक्रुरस्त्राणिदिव्यानिनानारूपाणिसंयुगे

नारायणास्त्रं ग्रसनस्तु चक्रे त्वाष्ट्रं निमिश्चाऽस्त्रवरं मुमोच ।
ऐषीकमस्त्रं च चकार जम्भो युद्धस्य दण्डास्त्रनिवारणाय ॥ ३५ ॥
यावच्च सन्धानवशं प्रयान्ति नारायणादीनि निवारणाय ।
तावत्क्षणेनैव जघान कोटीं दैत्येश्वराणां किल कालदण्डः ॥ ३६ ॥
अनन्तरं शान्तभयं तदस्त्रं दैत्यास्त्रयोगेन च कालदण्डम् ।
शान्तं तदालोक्य हरिः स्वमस्त्रं कोपेन कालानलतुल्यमूर्तिः ॥ ३७ ॥
जग्राह चक्रं तपनायुतप्रभमुग्रारमात्मानमिव द्वितीयम् ।
चिक्षेप सेनापतये ज्वलन्तं चतुर्भुजः संयति सम्प्रगृह्य ॥ ३८ ॥
तदावजच्चक्रमथो विलोक्य सर्वात्मना दैत्यवराः स्ववीर्यात् ।
नाशक्नुवन्वारयितुं प्रचण्डं दैवं यथा पूर्वमिवोपपन्नम् ॥ ३६ ॥



तदप्रतर्क्यं नवहेतितुल्यं चक्रं पपात ग्रसनस्य कण्ठे ।
तद्रक्तधारारुणघोरनाभि जगाम भूयोऽपि करं मुरारेः ॥ ४० ॥
चक्राहतः संयति दानवश्च पपात भूमौ प्रममार चाऽपि ।
दैत्याश्च शेषा भृशशोकमापुः क्रोधं च केचित्पिपिषुर्भुजांश्च ॥ ४१ ॥

ततो विनिहते दैत्ये ग्रसने बलनायके । निर्मर्यादमयुध्यन्त हरिणा सहदानवाः पट्टिशैर्मुशलैः प्रासैर्गदाभिःकणपैरपि । तीक्ष्णाननैश्च नाराचैश्चक्रैः शक्तिभिरेव च तदस्त्रजालं तैर्मुक्तं लब्धलक्षो जनार्दनः । एकैकं शतधा चक्रे बाणैरग्निशिखोपमैः

जघान तेषां संक्रुद्धः कोटिकोटिं जनार्दनः ।
ततस्ते सहसा भूत्वा न्यपतन्केशवोपरि ॥ ४५ ॥
गरुडं जगृहुः केचित्पादयोःशतशोऽसुराः ।
ललम्बिरे च पक्षाभ्यां मुखे चान्ये ललम्बिरे ॥ ४६ ॥
केशवस्याऽपि धनुषि भुजयोः शीर्षं एव च ।
ललम्बिरे महादैत्या निनदन्तो मुहुर्मुहुः ॥ ४७ ॥

तदद्भुतं महद्दृष्ट्वा सिद्धचारणवार्त्तिकाः । हाहेति मुमुचुर्नादमम्बरे चाऽस्तुवन्हरिम् ततो हरिर्विनिर्धूयपातयामासतान्भुवि । यथाप्रबुद्धःपुरुषोदोषान्संसारसम्भवान् विकोशश्च ततःकृत्वानन्दकंखड्गमुत्तमम् । चर्मचाप्यमलंविष्णुःपदातिस्तानधावत

ततो मुहूर्तमात्रेण पद्मानि दश केशवः ।
चकर्त्त मार्गे बहुभिर्विचरन्दैत्यसत्तमान् ॥ ५१ ॥

ततो निमिप्रभृतयो विनद्याऽसुरसत्तमाः । अधावन्तमहेष्वासाःकेशवंपादचारिणम् गरुत्मांश्चाऽभ्ययात्तूर्णमारुरोह च तं हरिः । उवाच च गरुत्मन्तं तस्मिंश्चतुमुलेरणे अश्रान्तो यदि तार्क्ष्यासिमथनंप्रति तद्व्रज । श्रान्तश्चेच्च मुहूर्त्तंत्वं रणादपसृतोभव

तार्क्ष्य उवाच

नमेश्रमोऽस्तिलोकेशकिञ्चित्संस्मरतश्चमे ।यन्मेसुतान्वाहनत्वेकल्पयामासतारकः इति ब्रुवन्रणे दैत्यं मथनं प्रति सोऽगमत् । दैत्यस्त्वभिमुखं दृष्ट्वाशङ्खचक्रगदाधरम्

जघानभिण्डिपालेनशितधारेणवक्षसि । तंप्रहारमचिन्त्यैवविष्णुस्तस्मिन्महाहवे
जघान पञ्चभिर्बाणैर्गिरीन्द्रस्यापि भेदकैः ।
आकर्णकृष्टैर्दशभिः पुनर्विद्धः स्तनान्तरे ॥ ५८ ॥
विचेतनो मुहूर्तात्स संस्तभ्य मथनः पुनः । गृहीत्वापरिघंमूर्ध्निजनार्दनमताडयत्
विष्णुस्तेन प्रहारेण किञ्चिदाघूर्णितोऽभवत् ।
ततः कोपविवृत्ताक्षो गदां जग्राह माधवः ॥ ६० ॥
तया सन्ताडयामास मथनंहृदये दृढम् । स पपात तथा भूमौचूर्णिताङ्गोममार च
तस्मिन्निपतिते भूमौ मथने मथिते भृशम् । अवसादंययुर्दैत्याःसर्वे तेयुद्धमण्डले
ततस्तेषु विषण्णेषुदानवेष्वतिमानिषु । चुकोप रक्तनयनो महिषो दानवेश्वरः ॥
प्रत्युद्ययौ हरिं रौद्रः स्वबाहुबलमाश्रितः । तीक्ष्णधारेण शूलेन महिषोहरिमर्दयन्
शक्त्या च गरुडं वीरो हृदयेऽभ्यहनद् दृढम् ।
ततो विवृत्य वदनं महाचलगुहानिभम् ॥ ६५ ॥
ग्रस्तुमैच्छन्रणे दैत्यः सगरुत्मन्तमच्युतम् ।
अथाच्युतोऽपि विज्ञाय दानवस्य चिकीर्षितम् ॥ ६६ ॥
वदनं पूरयामास दिव्यैरस्त्रैर्महाबलः । स तैर्बाणैरभिहतो महिषोऽचलसन्निभः ॥
परिवर्तितकायार्धः पपाताऽथममार च । महिषं पतितंदृष्ट्वाजीवयित्वापुनर्हरिः
महिषं प्राह मत्तस्त्वं वधं नाऽर्हसि दानव ! ।
योषिद्वध्यः पुरोक्तस्त्वं साक्षात्कमलयोनिना ॥ ६९ ॥
उत्तिष्ठ गच्छ मन्मुक्तो द्रुतमस्मान्महारणात् ।
इत्युक्तो हरिणा तस्माद्देशादपगतोऽसुरः ॥ ७० ॥
तस्मिन्पराङ्मुखे दैत्येमहिषेशुम्भदानवः । सन्दष्टौष्ठपुटाटोपो भृकुटीकुटिलाननः
निर्मथ्य पाणिना पाणिं धनुरादाय भैरवम् ।
सज्जीकृत्य महाघोरान्मुमोच शतशः शरान् ॥ ७२ ॥
स चित्रयोधी दृढमुष्टिपातस्ततश्च विष्णुं गरुडं च दैत्यः ।



बाणैर्ज्वलद्वह्निशिखानिकाशैः क्षिप्तैरसङ्ख्यैः प्रतिघातहीनैः ॥ ७३ ॥
विष्णुश्च दैत्येन्द्रशरार्दितो भृशं भुशुण्डिमादाय कृतान्ततुल्याम् ।
तया मुखं चाऽस्य पिपेष सङ्ख्ये शुम्भस्य जत्रुं च धराधराभम् ॥ ७४ ॥
ततस्त्रिभिःशुम्भभुजं द्विषष्ट्या सूतस्य शीर्षं दशभिश्च केतुम् ।
विष्णुर्विकृष्टैः श्रवणावसानं दैत्यस्य बाणैर्ज्वलनार्कवर्णैः ॥ ७५ ॥
स तैश्च विद्धो व्यथितो बभूव दैत्येश्वरो विस्रुतशोणिताक्तः ।
ततोऽस्य किञ्चिचलितस्य धैर्यादुवाच शङ्खाम्बुजशार्ङ्गपाणिः ॥ ७६ ॥
योषित्सुवध्योऽसि रणं विमुञ्च शुम्भाऽसुरस्वल्पतरैरहोभिः ।
मत्तोऽर्हसि त्वं न वृथैव मूढ! ततोऽपयातः स च शुम्भदानवः ॥ ७७ ॥
जम्भोऽथ तद्विष्णुमुखान्निशम्य जगर्ज चोच्चैः कृतसिंहनादः ।
प्रोवाच वाक्यं च सलीलमाजौ महाट्टहासेन जगद्विकम्प्य ॥ ७८ ॥
किमेभिस्ते जलावास दैत्यैर्हीनपराक्रमैः ।
मामासादययुद्धेऽस्मिन्यदि ते पौरुषं क्वचित् ॥ ७९ ॥
यत्तेपूर्वं हतादैत्या हिरण्याक्षमुखाःकिल । जम्भस्तदाभवन्नैवपश्यमामग्रसंस्थितम्
पश्य तालप्रतीकाशौ भुजावेतौ हरे! मम ।
वक्षो वा वज्रकठिनं मयि प्रहर तत्सुखम् ॥ ८१ ॥
इत्युक्तः केशवस्तेन सृक्कि ( क ) णी स लिहन्रुषा ।
मुमोच परिघं घोरं गिरीणामपिदारणम् ॥ ८२ ॥
ततस्तस्याऽप्यनुपदं कालायसमयं दृढम् । मुमोच मुद्गरंविष्णुर्द्वितीयं पर्वतं यथा
तदायुधद्वयं दृष्ट्वा जम्भोन्यस्यरथेधनुः । आप्लुत्यपरिघं गृह्य गरुडंतेनजघ्निवान्
द्वितीयंमुद्गरंचाऽनुगृहीत्वा विनदन्रणे । सर्वप्राणेन गोविन्दं तेन मूर्ध्निजघानसः
ताभ्यां चाऽतिप्रहाराभ्यामुभौगरुडकेशवौ ।
मोहाविष्टौविचेतस्कौमृतकल्पाविवासताम् ॥ ८६ ॥
तदद्भुतं महद्दृष्ट्वा जगर्जुर्दैत्यसत्तमाः । नैतान्हर्षमदोद्धूतानिदं सेहे जगत्तदा

सिंहनादैस्तलोन्नादैर्धनुर्नादैश्चबाणजैः । जम्भन्ते हर्षयामासुर्वासांस्यादुधुवुश्च ते
शङ्खांश्च पूरयामासुश्चिक्षिपुर्देवताभृशम् ॥ ८६ ॥
सङ्ग्रामवाप्याऽथ महारणे हरिः सवैनतेयः परिरभ्य जम्भम् ।
पराङ्मुखः संयुगादप्रधृष्यात्पलायनं वेगपरश्चकार ॥ ६० ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायांप्रथमे माहेश्वरखण्डे
कौमारिकाखण्डे दैत्यैः सह विष्णोर्युद्धवर्णनंनामविंशोऽध्यायः ॥ २० ॥

—:*:—

# एकविंशोऽध्यायः

## देवासुरसङ्ग्रामे तारकविजयवर्णनम्

नारद उवाच

तमालोक्य पलायन्तं विध्वस्तध्वजकार्मुकम् ।
दैत्यांश्च मुदितानिन्द्रः कर्तव्यं नाऽध्यगच्छत ॥ १ ॥
अथाऽऽयान्निकटं विष्णोः सुरेशस्त्वरयान्वितः ।
उवाच चैनं मधुरमुत्साहपरिबृंहितम् ॥ २ ॥
किमेभिः क्रीडसे देव दानवैर्दुष्टमानसैः । दुर्जनैर्लब्धरन्ध्रस्य पुरुषस्यकुतःक्रियाः
शक्तेनोपेक्षितो नीचो मन्यते बलमात्मनः । तस्मान्न नीचं मतिमानुपेक्षेत कथञ्चन
अथाग्रे सरसम्पत्त्यारथिनोजयमाययुः । कस्तेसखाऽभवत्पूर्वं हिरण्याक्षवधेविभो!
हिरण्यकशिपुर्दैत्यो वीर्यशालीमदोद्धतः । प्राप्यत्वां तृणवन्नष्टस्तत्रकोऽग्रेसरस्तव
पूर्वं प्रतिबला दैत्यामधुकैटभसन्निभाः ।
निविष्टास्त्वान्तुसम्प्राप्य शलभा इव पावकम् ॥ ७ ॥
युगे युगे च दैत्यानां त्वत्तो नाशोऽभवद्धरे! ।
तथैवाऽद्येह भीतानां त्वं हि विष्णो ! सुराश्रयः ॥ ८ ॥



एवंसञ्चोदितो विष्णुर्व्यवर्धत महाभुजः । बलेनतेजसाऽऽव्यासर्वभूताश्रयोऽरिहा
अथोवाच सहस्राक्षं केशवः प्रहसन्निव । एवमेतद्यथा प्राह भवानस्मद्गतं वचः
त्रैलोक्यदानवान्सर्वान्दग्धुं शक्तः क्षणादहम् ।
दुर्जयस्तारकः किंतु मुक्त्वा सप्तदिनं शिशुम् ॥ ११ ॥
महिषश्चैव शुम्भश्च उभौ वध्यौ च योषिता ।
जम्भोदुर्वाससा शप्तः शक्रवध्यो भवानिति ॥
तस्मात्त्वं दिव्यवीर्येण जहि जम्भं मदोत्कटम् ॥ १२ ॥
अवध्यः सर्वभूतानां त्वामृते स तु दानवः ॥ १३ ॥
मयागुप्तो रणेजम्भं जगत्कण्टकमुद्धर । तद्वैकुण्ठवचः श्रुत्वा सहस्राक्षोऽमरारिहा
समादिशत्सुराध्यक्षान्सैन्यस्य रचनाम्प्रति ।
ततश्चाऽभ्यर्थितो देवैर्विष्णुःसैन्यमकल्पयत् ॥ १५ ॥
यत्सारं सर्वलोकस्य वीर्यस्यतपसोऽपि च । तदैकादशरुद्रांश्चचकाराग्रेसरान्हरिः
व्यालीढाङ्गामहादेवा बलिनो नीलकन्धराः ।
चन्द्रखण्डत्रिपुण्ड्राश्च पिङ्गाक्षाः शूलपाणयः ॥ १७ ॥
पिङ्गोत्तुङ्गजटाजूटाः सिंहचर्मावसायिनः ।
भस्मोद्धूलितगात्राश्च भुजमण्डलभैरवाः ॥ १८ ॥
कपालीशादयो रुद्राविद्रावितमहासुराः ।
कपाली पिङ्गलो भीमो विरूपाक्षो विलोहितः ॥ १६ ॥
अजकः शासनः शास्ता शम्भुश्चन्द्रो भवस्तथा ।
एतएकादशानन्त बलारुद्राः प्रभाविनः ॥ २० ॥
अपालयन्त त्रिदशान्विगर्जन्त इवाम्बुदाः । हिमाचलाभेमहतिकाञ्चनाम्बुरुहस्रजि
प्रचञ्चलमहाहेमघण्टासंहतिमण्डिते । ऐरावते चतुर्दन्ते मत्तमातङ्ग आस्थितः ॥
महामदजलस्रावे कामरूपेशतक्रतुः । तस्थौ हिमगिरेः शृङ्गे भानुमानिवदीप्तिमान्
तस्यारक्षत्पदं सव्यं मारुतोऽमितविक्रमः ॥ २३ ॥

जुगोपाऽपरमग्निश्च ज्वालापूरितदिङ्मुखः । पृष्ठरक्षोऽभवद्विष्णुःसमरेशःशतक्रतोः

आदित्या वसवो विश्वे मरुतश्चाऽश्विनावपि ।
गन्धर्वा राक्षसायक्षाः स किन्नरमहोरगाः ॥ २५ ॥
कोटिशः कोटिशः कृत्वा वृन्दं चिह्नोपलक्षितम् ।
विश्रावयन्तः स्वां कीर्तिं बन्दिवृन्दैः पुरःसरैः ॥ २६ ॥
चेलुर्दैत्यवधे दृप्ता नानावर्णायुधध्वजाः ॥ २७ ॥

शतक्रतोरमरनिकायपालिता पताकिनी याननिनादनादिता ।
सितोन्नतध्वजपटकोटिमण्डिता बभूव सा दितिसुतशोकवर्द्धिनी ॥

आयान्तीं तां विलोक्याऽथ सुरसेनां गजासुरः ।
गजरूपी महांश्चैव संहाराम्भोधिविक्रमः ॥ २९ ॥

परश्वधायुधो दैत्यो दशनौष्ठकसम्पुटः । ममर्द चरणेदेवांश्चिक्षेपाऽन्यान्करेण च
परान्परशुना जघ्ने दैत्येन्द्रोरौद्रविक्रमः । तस्यैवं निघ्नतःक्रुद्धा देवगन्धर्वकिन्नराः

मुमुचुः संहताः सर्वे चित्रशस्त्रास्त्रसंहितम् ।
परश्वधांश्च चक्राणि भिन्दिपालान्समुद्गरान् ॥ ३२ ॥
कुन्तान्प्रासाञ्छरांस्तीक्ष्णान्मुद्गरांश्चाऽपि दुःसहान् ।
तान्सर्वान्सोऽग्रसद्दैत्यो यूथपः कवलानिव ॥ ३३ ॥
कोपस्फुरितदंष्ट्राग्रः करस्फोटेन नादयन् ।
सुरान्निघ्नंश्चचाराऽऽजौ दुष्प्रेक्ष्यः सोऽथदानवः ॥ ३४ ॥
यस्मिन्यस्मिन्निपतति सुरवृन्देगजासुरः ।
तस्मिंस्तस्मिन्महाशब्दो हाहाकारोव्यजायत ॥ ३५ ॥

अथ विद्रवमानं तद्बलं प्रेक्ष्य समन्ततः । रुद्राः परस्परं प्रोचुरहंकारोत्थितार्चिषः
भोभो गृह्णत दैत्येन्द्रं भिन्दतैनं महाबलाः । कर्षतैनं शितैः शूलैर्भञ्जतैनं हि मर्मसु

कपाली वाक्यमाकर्ण्य शूलं सितशितं मुखे ।
सम्मार्ज्य वामहस्तेन संरम्भाद्विवृतेक्षणः ॥ ३८ ॥



प्रोत्फुल्लारुणनीलाब्जसंहतिः सर्वतो दिशः ।
अथागाद् भ्रुकुटीवक्रो दैत्येन्द्राभिमुखोरणे ॥ ३६ ॥

दृढेन मुष्टिबन्धेन शूलंविष्टभ्य निर्मलः । जघान कुम्भदेशे तु कपाली गजदानवम्
ततो दशाऽपि ते रुद्रा निर्मलायोमयै रणे । जघ्नुःशूलैस्तुदैत्येन्द्रंशैलवर्ष्माणमाहवे
सुस्राव शोणितं पश्चात्सर्वस्रोतस्सु तस्य वै । शूलरक्तेन रुद्रस्य शुशुभे गजदानवः

प्रोत्फुल्लामलनीलाब्जं शरदीवाऽमलंसरः ।
भस्मशुभ्रतनुच्छायै रुद्रैर्हंसैरिवाऽऽवृतम् ॥ ४३ ॥

क्रुद्धं कपालिनं दैत्यः प्रचलत्कर्णपल्लवः । भवं च दन्तैर्विभिदे नाभिदेशे गजासुरः
दृष्ट्वाऽनुरक्तं रुद्राभ्यांनवरुद्रास्ततोद्रुतम् । विव्यधुर्विशिखैःशूलैःशरीरममरद्विषः
ततः कपालिनं त्यक्त्वा भवंचासुरपुङ्गवः । वेगेनकुपितोदैत्यो नव रुद्रानुपाद्रवत्

ममर्द चरणाघातैर्दन्तैश्चाऽपि करेण च ॥ ४६ ॥

ततोऽसौशूलयुद्धेनश्रममासादितोयदा । तदाकपाली जग्राह करमस्याऽमरद्विषः

भ्रामयामास चाऽतीव वेगेन च गजासुरम् ।
दृष्ट्वा श्रमातुरं दैत्यं किञ्चिच्च्यावितजीवितम् ॥ ४८ ॥
निरुत्साहं रणे तस्मिन्गतयुद्धोत्सवोऽभवत् ।
ततो भ्रमतएवाऽस्य चर्मउत्कृत्य भैरवम् ॥ ४९ ॥

स्रवत्सर्वाङ्गरक्तौघं चकाराऽम्बरमात्मनः । तुष्टुवुस्तंतदादेवाबहुधाबहुभिःस्तवैः
ऊचुश्चैनं च योहन्यात्स म्रियेत ततस्त्वसौ । दृष्ट्वाकपालिनोरूपंगजचर्माम्बरावृतम्
वृत्रेसुदुद्रुवुर्जघ्नुर्निपेतुश्च सहस्रशः । एवं विलुलिते तस्मिन्दानवेन्द्रे महाबले ॥

गजं मत्तमथाऽऽरुह्य शतदुन्दुभिनादितम् ।
निमिरभ्यपतत्तूर्णं सुरसैन्यानि लोडयन् ॥ ५३ ॥

यांयां निमिगजोयातिदिशंतांतांसवाहनाः । दुद्रुवुश्चुक्रुशुर्देवा भयेनाकम्पितामुहुः
गन्धेन सुरमातङ्गा दुद्रुवुस्तस्य हस्तिनः । पलायितेषुसैन्येषुसुराणांपाकशासनः

तस्थौ दिक्पालकैः सार्धमष्टभिः केशवेन च ।

सम्प्राप्तस्तस्यमातङ्गो यावच्छक्रगजम्प्रति ॥ ५६ ॥
तावच्छक्रगजो भीतो मुक्त्वा नादं सुभैरवम् ।
ध्रियमाणोऽपि यत्नेन चकोर इव तिष्ठति ॥ ५७ ॥
पलायति गजेतस्मिन्नारूढः पाकशासनः । विपरीतमुखंयुद्धंदानवेन्द्रेणसोऽकरोत्
शतक्रतुस्तु शूलेन निमिं वक्षस्यताडयत् । गदयाद्दन्तिनं तस्यगल्लदेशेऽहनद्भृशम्
तंप्रहारमचिन्त्यैव निमिर्निर्भयपौरुषः । ऐरावतं कटीदेशे मुद्गरेणाभ्यताडयत् ॥
स हतो मुद्गरेणाऽथ शक्रकुञ्जर आहवे । जगामपश्चात्पद्भ्यांचपृथिवींभूधराकृतिः
लाघवात्क्षिप्रमुत्थाय ततोऽमरमहागजः ।
रणादपससर्पाऽथ भीषितो निमिहस्तिना ॥ ६२ ॥
ततो वायुर्ववौरूक्षोबहुशर्करपांशुलः । सम्मुखोनिमिमातङ्गोऽकम्पनोऽचलकम्पनः
स्रुतरक्तो बभौ शैलो घनधातुह्रदो यथा ॥ ६३ ॥
धनेशोऽपि गदांगुर्वीं तस्यदानवहस्तिनः ।
मुमोच वेगान्न्यपतत्सागदा तस्य मूर्धनि ॥ ६४ ॥
गजो गदानिपातेन स तेनपरिमूर्छितः । दन्तैर्भित्वाधरांवेगात्पपाताऽचलसन्निभः
पतिते च गजे तस्मिन्सिंहनादो महानभूत् ।
सर्वतः सुरसैन्यानां गजबृंहितबृंहितः ॥ ६६ ॥
हेषारवेणचाऽश्वानां रणास्फोटैश्च धन्विनाम् ।
गजं तं निहतं दृष्ट्वा निमिंचाऽपि पराङ्मुखम् ॥ ६७ ॥
सुराणां सिंहनादं च सन्नादितदिगन्तरम् ।
जम्भो जज्वाल कोपेन सन्दीप्त इव पावकः ॥ ६८ ॥
ततः सकोपरक्ताक्षो धनुष्यारोप्य सायकम् ।
तिष्ठेतिचाब्रवीत्तारं सारथिं चाप्यनन्दयत् ॥ ६९ ॥
तमायान्तमभिप्रेक्ष्य धनुष्याहितसायकम् ।
शतक्रतुरदीनात्मा दृढमादत्त कार्मुकम् ॥ ७० ॥



बाणं च तैलधौताग्रमर्धचन्द्रमजिह्मगम् ॥ ७१ ॥
तेनाऽस्य सशरं चापं चिच्छेद बलवृत्रहा । अपास्यतद्धनुश्छिन्नंजम्भोदानवनन्दन
अन्यत्कार्मुकमादाय वेगवद्भारसाधनम् ।
शरांश्चाशीविषाकारांस्तैलधौतानजिह्मगान् ॥ ७३ ॥
शक्रं विव्याधदशभिर्जत्रुदेशेच पत्रिभिः । हृदयेचत्रिभिश्चैवद्वाभ्यांचस्कन्धयोर्द्वयोः
शक्रोऽपि दानवेन्द्राय बाणजालमभीरयन् ।
अप्राप्तान्दानवेन्द्रस्तु शरांश्छक्रभुजेरितान् ॥ ७५ ॥
चिच्छेद शतधाऽऽकाशे शरैरग्निशिखोपमैः । ततश्च शरजालेन देवेन्द्रोदानवेश्वरम्
आच्छादयत यत्नेन वर्षास्विव घनैर्नभः ।
दैत्योऽपि बाणजालेन विव्याध सायकैः शितैः ॥ ७७ ॥
यथा वायुर्घनाटोपं यद्वार्यं दिशां मुखे । शक्रोऽथ क्रोधसंरम्भान्नविशेषयते यदा
दानवेन्द्रं तदाचक्रे गन्धर्वास्त्रं महाद्भुतम् । ततोऽस्यतेजसाव्याप्तमभूद्गगनगोचरम्
गन्धर्वनगरैश्चापि नानाप्राकारतोरणैः । मुञ्चद्भिरद्भुताकारैरस्त्रवृष्टिं समन्ततः
तयाऽस्त्रवृष्ट्या दैत्यानां हन्यमानामहाचमूः ।
जम्भं शरणमागच्छ त्राहित्राहीति भारत ॥ ८१ ॥
ततोजम्भो महावीर्योविनद्य प्रहसन्मुहुः । स्मरन्साधुसमाचारं दैत्यानामभयंददौ
ततोऽस्त्रं मौशलंनाम मुमोच सुमहाभयम् । अथोग्रमुसलैःसर्वमभवत्पूरितं जगत्
तैश्चभग्नानि सर्वाणि गन्धर्वनगराणि च । अथोग्रैकप्रहारेण रथमश्वं गजं सुरम्
चूर्णयामास तत्क्षिप्रं शतशोऽथ सहस्रशः ।
ततः सुराधिपः शक्रस्त्वाष्ट्रमस्त्रमुदैरयत् ॥ ८५ ॥
सन्धयमाने ततश्चास्त्रे निश्चेरुः पावकार्चिषः ।
ततो यन्त्रमया विद्याः प्रादुरासन्सहस्रशः ॥ ८६ ॥
तैर्यन्त्रैरभवद्युद्धमन्तरिक्षं वितारकम् । तर्यन्त्रैर्मौशलं भग्नं हन्यन्ते चासुरास्तदा ॥
शैलास्त्रं मुमुचे जम्भो यन्त्रसंघातचूर्णनम् । व्यामप्रमाणैरुपलैस्ततो वर्षःप्रवर्तते

त्वाष्ट्रेण निर्मितान्याशु यानि तन्त्राणि भारत ।
तेनोपलनिपातेन गतानि तिलशस्ततः ॥ ८६ ॥
ततः शिरस्सु देवानां शिलाः पेतुर्महाजवाः ।
दारयन्तश्च वसुधां चतुरङ्गबलं च तत् ॥ ६० ॥
ततोवज्रास्त्रमकरोत्सहस्राक्षः पुरन्दरः ।
ततः शिलामहावर्षं व्यशीर्यत समन्ततः ॥ ६१ ॥

ततः प्रशान्तैःशैलास्त्रैर्जम्भोभूधरसन्निभः । ऐषीकमस्त्रमकरोच्चूर्णितान्यपराक्रमः ऐषीकेणाऽगमन्नाशंवज्रास्त्रंगिरिदारणम् । विजृम्भत्यथचैषीकेपरमास्त्रेऽतिदारुणे जज्वलुर्देवसैन्यानि सस्यंदनगजानि च । दह्यमानेष्वनीकेषु तेजसाऽस्त्रस्य सर्वतः आग्नेयमस्त्रमकरोद्बलहा पाकशासनः । तेनाऽस्त्रेण च तन्नाशमैषीकमगमत्तदा ॥

तस्मिन्प्रतिहते चास्त्रे पावकास्त्रं व्यजृम्भत ।
जज्वाल सेना जम्भस्य रथः सारथिरेव च ॥ ६६ ॥
ततः प्रतिहतास्त्रोऽसौ दैत्येन्द्रःप्रतिभानवान् ।
वारुणास्त्रं मुमोचाथ शमनं पावकार्चिषाम् ॥ ६७ ॥

ततो जलधरैर्व्योम स्फुरद्विद्युल्लताकुलैः । गम्भीराक्षसमाधारैश्चाभ्यपूर्यत मेदिनी

करीन्द्रकरतुल्याभिर्धाराभिः पूरितं जगत् ।
शान्तमाग्नेयमस्त्रंच विलोक्येन्द्रश्चकारह ॥ ६६ ॥
वायव्यमस्त्रमतुलं तेन मेघा ययुःक्षयम् ।
वायव्यास्त्रबलेनाऽथ निर्धूते मेघमण्डले ॥ १०० ॥
बभूवाऽनाविलंव्योम नीलोत्पलदलप्रभम् ।
वायुनाचाऽतिरूपेण कम्पिताश्चैवदानवाः ॥ १०१ ॥
न शेकुस्तत्रतेस्थातुंरणेऽपिबलिनोऽपि ये ।
जम्भस्ततोऽभवच्छैलो दशयोजनविस्तृतः ॥ १०२ ॥
मारुतप्रतिघातार्थं दानवानां बलाधिपः ।



नानाश्चर्यसमायुक्तो नानाद्रुमलतावृतः ॥ १०३ ॥
ततः प्रशमिते वायौ दैत्येन्द्रे पर्वताकृतौ ।
महाशनिं वज्रमयीं मुमोचाऽऽशु शतक्रतुः ॥ १०४ ॥
तयाऽशन्या पतितया दैत्यस्याचलरूपिणः ।
कन्दराणि व्यशीर्यन्त समन्तान्निर्झराणि च ॥ १०५ ॥

ततः सादानवेन्द्रस्यशैलमायान्यवर्तत । निवृत्तशैलमायोऽथ दानवेन्द्रो मदोत्कटः बभूव कुञ्जरो भीमो महाशैलमयाकृतिः । ममर्द च सुरानीकंदन्तैश्चाऽभ्यहनत्सुरान् बभञ्जपृष्ठतःकश्चित्करेणाऽऽकृष्य दानवः । ततः क्षपयतस्तस्य सुरसैन्यानिवृत्रहा

अस्त्रं त्रैलोक्यदुर्धर्षं नारसिंहं मुमोच ह ।
ततः सिंहसहस्राणि निश्चेरुर्मन्त्रतेजसा ॥ १०६ ॥
हृष्टदंष्ट्राट्टहासानि क्रकचाभनखानि च ।
तैर्विपाटितगात्रोऽसौ गजमायां व्यपोहयत् ॥ ११० ॥

ततश्चाशीविषो घोरोऽभवत्फणसमाकुलः । विषनिःश्वासनिर्दग्धसुरसैन्यमहारथः ततोऽस्त्रं गारुडंचक्रेशक्रःसम्प्रहरन्रणे । ततस्तस्माद्गरुत्मन्तः सहस्राणिविनिर्ययुः

तैर्गरुत्मद्भिरासाद्य जम्भं भुजगरूपिणम् ।
कृतस्तु खण्डशो दैत्यः साऽस्य माया व्यनश्यत ॥ ११३ ॥

मायायां चप्रणष्टायांततोजम्भोमहासुरः । चकार रूपमतुलं चन्द्रादित्यपदानुगम् चिवृत्तनयनो ग्रस्तुमिमेष सुरपुङ्गवान् । ततोऽस्य प्राविशद्वक्त्रंसमहारथकुञ्जरा ॥ सुरसेनाऽविशद्भीमं पातालोत्तालतालुकम् । सैन्येषुग्रस्यमानेषुदानवेनबलीयसा ॥ शक्रो दीनत्वमापन्नःश्रान्तवाहनवाहनः । कर्तव्यतांनाध्यगच्छत्प्रोवाचेदंजनार्दनम्

किमनन्तरमेवाऽस्ति कर्तव्यं नो विशेषतः ।
तदादिश घटामोऽस्यदानवस्य युयुत्सतः ॥ ११८ ॥
ततोहरिरुवाचेदं वज्रायुधमुदारधीः ।
न साम्प्रतं रणं त्याज्यं शत्रुकातरभैरवम् ॥ ११६ ॥

मा गच्छमोहंमागच्छक्षिप्रमस्त्रंस्मर प्रभो । नारायणास्त्रंप्रयतःश्रुत्वेतिमुमुचेसच

एतस्मिन्नन्तरे दैत्यो विवृतास्योऽग्रसत्क्षणात् ।

त्रीणि त्रीणि च लक्षाणि किन्नरोरगरक्षसाम् ॥ १२१ ॥

ततोनारायणास्त्रं चनिपपाताऽस्यवक्षसि । महास्त्रभिन्नहृदयःसुस्रावरुधिरंचसः

ततःस्वतेजसा रूपंतस्य दैत्यस्यनाशितम् ।

ततश्चाऽन्तर्दधेदैत्यःकृत्वा हासं महोत्कटम् ॥ १२३ ॥

गगनस्थः स दैत्येन्द्रः शस्त्राशनिमतीन्द्रियः ।

मुमोच सुरसैन्यानां संहारकरणीं पराम् ॥ १२४ ॥

तथा परश्वधांश्चक्रवज्रबाणान्समुद्गरान् ।

कुन्तान्खड्गान्भिण्डिपालानयोमुखगुडांस्तथा ॥ १२५ ॥

ववर्ष दानवो रोषादवध्यानक्षयानपि ।

तैरस्त्रैर्दानवोन्मुक्तैर्देवानीकेषु भीषणैः ॥ १२६ ॥

बाहुभिर्धरणी पूर्णा शिरोभिश्च सकुण्डलैः ।

ऊरुभिर्गजहस्ताभैः करीन्द्रैश्चाचलोपमैः ॥ १२७ ॥

भग्नैषा दण्डचक्राक्षै रथैश्च रथिभिः सह ।

दुःसंचाराऽभवत्पृथ्वीमांसशोणितकर्दमा ॥ १२८ ॥

रुधिरौघह्रदावर्त्ता गजदेहशिलोच्चया । कबन्धनृत्यबहुला महासुरप्रवाहिणी ॥

शृगालगृध्रध्वांक्षाणां परमानन्दकारिणी ।

पिशाचजातिभिः कीर्णं पीत्वाऽऽमिषं सशोणितम् ॥ १३० ॥

असंभ्रमाभिर्भार्याभिःसहनृत्यद्भिरुद्धता।काचित्पत्नीप्रकुपितागजकुम्भान्तमौक्तिकैः

पिशाचोयत्रचाश्वानांखुरानेकत्रचाऽकरोत् ।कर्णपूरेषुमोदन्तेपश्यन्त्यन्याःसरोषतः

प्रसादयन्ति बहुधा महाकर्णार्थकोविदाः ।

केचिद्वदन्ति भो देवा भोदैत्याःप्रार्थयामहे ॥ १३३ ॥

आकल्पमेवं योद्धव्यमस्माकं तृप्तिहेतवे ।



केचिदूचुरयं दैत्यो देवोऽयमतिमांसलः ॥ १३४ ॥

म्रियते यदि सङ्ग्रामेधातुर्दद्मोऽपयाचितम् ।

केचिद्युध्यत्सुवीरेषुसृक्किणीसंलिहन्तिच ॥ १३५ ॥

एतेन पयसा विज्ञोदुर्जनःसुजनोयथा । केचिद्रक्तनदीनां च तीरेष्वास्तिक्यबुद्धयः

पितॄन्देवांस्तर्पयन्तिशोणितैश्चाऽऽमिषैःशुभैः ।

केचिवामिषराशिस्था दृष्ट्वाऽन्यस्यकरामिषम् ॥ १३७ ॥

देहिदेहीतिवाशन्तोधनिनःकृपणायथा ।केचित्स्वयंप्रतृप्ताश्चदृष्ट्वावैखादतःपरान्

सरोषमोष्ठौ निर्भुज्यपश्यन्त्येवात्यसूयया ।

केचित्स्वमुदरंक्रुद्ध्वानिंदन्ति ताडयन्ति च ॥ १३९ ॥

सर्वभक्ष्यमभीप्संतस्तृप्ताः परधनं यथा ।

केचिदाहुरद्य एव श्लाघ्यासृष्टिस्तु वेधसः ॥ १४० ॥

सुप्रभातं सुनक्षत्रं पूर्वमासीद्वृथैव तत् ।

एवं बहुविधालापे पलादानां ततस्ततः ॥ १४१ ॥

अदृश्यः समरेजम्भो देवाञ्छस्त्रैरचूर्णयत् । ततःशक्रोधनेशश्चावरुणःपवनोऽनलः

यमोऽथ निर्ऋतिश्चाऽपि दिव्यास्त्राणि महाबलाः ।

आकाशे मुमुचुः सर्वे दानवायाऽभिसन्धय तु ॥ १४३ ॥

व्यर्थतांजग्मुरस्त्राणिदेवानांदानवम्प्रति । यथातिक्रूरचित्तानामार्यैकृत्यशतान्यपि

गतिंनविविदुश्चाऽपि श्रान्तादैत्याश्चदेवताः ।

दैत्यास्त्रभिन्नसर्वांगा गावःशीतार्दिताइव ॥ १४५ ॥

परस्परं व्यलीयन्तहाहाकिम्भाविवादिनः ।

तामवस्थां हरिर्दृष्ट्वा देवाञ्छक्रमुवाच ह ॥ १४६ ॥

अघोरमन्त्रं स्मरन्देवराज ! अस्त्रं हि यत्पाशुपतप्रभावम् ।

रुद्रेण तुष्टेन तव प्रदत्तमव्याहतं वीरवराभिधाति ॥ १४७ ॥

एवं स शक्रो हरिबोधितस्तदा प्रणम्य देवं वृषकेतुमीश्वरम् ।

समाददे बाणममित्रघातनं सम्पूजितं देवरणेऽर्द्धचन्द्रम् ॥ १४८ ॥
धनुष्यजय्ये विनियोज्य बुद्धिमान्ययोजयत्तत्र अघोरमन्त्रम् ॥ १४६ ॥
ततो वधायाऽऽशु मुमोच तस्य वा आकृष्य कर्णान्तमकुण्टदीधितिम् ।
अथाऽसुरः प्रेक्ष्य महास्त्रमापतद्विसृज्य मायां सहसा व्यवस्थितः ॥
प्रवेपमानेन मुखेन युज्यताचलेन गात्रेण च सम्भ्रमाकुलः ।
ततस्तु तस्याऽस्त्रवराभिमन्त्रितः शरोऽर्धचन्द्रः प्रसभं महारणे ॥१५१॥
पुरन्दरस्येष्वसनप्रमुक्तो मध्यार्कबिम्बं वपुषा विडम्बयन् ।
किरीटकूटस्फुरकान्तिसङ्कुलं सुगन्धिनानाकुसुमाधिवासितम् ।
प्रकीर्णधूमज्वलनाभमूर्धजं न्यपातयज्जम्भशिरः सकुण्डलम् ॥ १५३ ॥
तस्मिन्निन्द्रहते जम्भे प्रशशंसुः सुरा बहु ।
वासुदेवोऽपि भगवान्साधुसाध्विति चाऽब्रवीत् ॥ १५४ ॥
ततोजम्भंहतंदृष्ट्वादानवेन्द्राःपराङ्मुखाः । सर्वेतेभग्नसङ्कल्पा दुद्रवस्तारकम्प्रति
तांश्च त्रस्तान्समालोक्यश्रुत्वा स चतुरो हतान् ।
सारथिं प्रेरयामास याहीन्द्रंलघुसङ्गरे ॥ १५६ ॥
तथेत्युक्त्वा स च प्रायात्तारके रथमास्थिते ।
सावलेपं च सक्रोधं सगर्वं सपराक्रमम् ॥ १५७ ॥
साविष्कारं सधिक्कारं प्रयातो दानवेश्वरः ।
स युक्तं रथमास्थाय सहस्रेणगरुत्मताम् ॥ १५८ ॥
सर्वायुधपरिष्कारं सर्वास्त्रपरिरक्षितम् ।
त्रैलोक्यऋद्धिसम्पन्नंकल्पान्तान्तकनादितम् ॥ १५६ ॥
सैन्येन महता युक्तो नादयन्विदिशो दिशः ।
सहस्राक्षश्च तं दृष्ट्वा त्यक्त्वा वाहनदन्तिनम् ॥ १६० ॥
रथं मातलिना युक्तं तप्तहेमप्ररिष्कृतम् । चतुर्योजनविस्तीर्णं सिद्धसङ्घपरिष्कृतम्
गन्धर्वकिन्नरोद्गीतमप्सरोनृत्यसङ्कुलम् ॥ १६२ ॥



सर्वायुधमहाबाधं महारत्नसमाचितम् । अध्यतिष्ठत्तं रथं च परिवार्य समन्ततः ॥
दंशिता लोकपालाश्चतस्थुःसगरुडध्वजाः । ततश्चचालवसुधावबौ रक्षोमरुद्गणैः
चेलुश्च सागराः सप्त तथाऽनश्यद्रवेः प्रभा ।
ततोजज्वलुरस्त्राणिततोऽकम्पन्तवाहनाः ॥ १६५ ॥
ततः समस्तमुद्वृत्तं ततोऽदृश्यत तारकः ।
एकतस्तारको दैत्यः सुरसङ्घास्तथैकतः ॥ १६६ ॥
लोकावसादमेकत्र लोकोद्धरणमेकतः । चराचराणि भूतानिभयस्मियवन्ति च ॥
प्रशशंसुः सुराः पार्थ ! तदा तस्मिन्समागमे ॥ १६८ ॥
अस्त्राणि तजांसि धनांनि योधा यशो बलं वीरपराक्रमाश्च ।
सत्त्वौजसान्यङ्ग बभूवुरेषां देवासुराणां तपसः परन्तु नः ॥ १६६ ॥
अथाभिमुखमायान्तं देवा विनतपर्वभिः । बाणैरनलकल्पाग्रैर्विभ्यधुस्तारकं प्रति
स तानचिन्त्य दैत्येन्द्रो देवबाणक्षतान्हृदि ।
बाणैर्व्योम दिशःपृथ्वींपूरयामासदानवः ॥ १७१ ॥
नारायणं च सप्तया नवत्या च हुताशनम् ।
दशभिर्मारुतं मूर्ध्नि यमं दशभिरेव च ॥ १७२ ॥
धनदं चैव सप्तत्या वरुणं च तथाऽष्टभिः ।
विंशत्या निर्ऋतिं दैत्यःपुनश्चाऽष्टभिरेवच ॥ १७३ ॥
विव्याध पुनरेकैकं दशभिर्मर्मभेदिभिः ।
तथा च मातलिं दैत्यो विव्याधत्रिभिराशुगैः ॥ १७४ ॥
गरुडं दशभिश्चैव महिषं नवभिस्तथा ।
पुनर्दैत्योऽथ देवानां तिलशो नतपर्वभिः ॥ १७५ ॥
चकारवर्मजालानिचिच्छेदचधनूंषिच । ततोविकवचादेवाविधनुष्माःप्रपीडिताः
चापान्यन्यानि संगृह्य यावन्मुञ्चन्ति सायकान् ।
तावद्बाणं समाधाय कालानलसमप्रभम् ॥ १७७ ॥

ताडयामास शक्रंस हृदि सोऽपि मुमोच ह ।
ततोऽन्तरिक्षमालोक्यदृष्ट्वा सूर्यशताकृती ॥ १७८ ॥
तार्क्ष्यविष्णू समाजघ्ने शराभ्यां तावमुद्यताम् ।
प्रेतनाथस्य वह्नेश्च वरुणस्यशितैःशरैः ॥ १७६ ॥
निर्ऋतेश्चाऽकरोत्कार्यं भीतभीतं विमोहयन् ।
निरुच्छ्वासं समाहृत्य चक्रे बाणैः समीरणम् ॥ १८० ॥
ततः प्राप्य हरिः सञ्ज्ञां प्रोत्साह्य च दिशां पतीन् ।
बाणेन सारथेः कायाच्छिरोऽहार्षीत्सकुण्डलम् ॥ १८१ ॥
धूमकेतोर्ज्वलत्क्रुद्धस्तस्यच्छित्त्वा न्यपातयत् ।
दैत्यराजकिरीटंचचिच्छेदवासवस्ततः ॥ १८२ ॥
धनेशश्च धनुः क्रुद्धो विभेद बहुधा शरैः ।
वायुश्चक्रे च तिलशो रथम्वा क्षोणिकूबरम् ॥ १८३ ॥
निर्ऋतिस्तिलशो वर्म चक्रे बाणैस्तो रणे ।
कृत्वैतदतुलं कर्मतिष्ठतिष्ठेति चाऽब्रुवन् ॥ १८४ ॥
लिहन्तः सृक्किणीं देवा वासुदेवादयस्तदा ।
दृष्ट्वा तत्कर्म देवानां तारकोऽतुलविक्रमः ॥ १८५ ॥
मुमोच मुद्गरं भीमं सहस्राक्षाय सङ्गरे । दृष्ट्वा मुद्गरमायान्तमनिवार्यं रणाजिरे
रथादाप्लुप्य धरणीमगमत्पाकशासनः । मुद्गरोऽपि रथोपस्थे पपात परुषस्वनः
स रथं चूर्णयामास न ममार च मातलिः ।
गृहीत्वा पट्टिशंदैत्यो जघानोरसिकेशवम् ॥ १८८ ॥
स्कन्धेगरुत्मतःसोऽपिनिषसादविचेतनः । खड्गेनराक्षसेन्द्रश्चभित्वाभूमावपातत्
यमं च पातयामास भूमौ दैत्यो मुखे हतम् ।
वह्निं च भिण्डिपालेन चक्रे हत्वा विचेतनम् ॥ १६० ॥
वायुं पदा तदाऽऽक्षिप्य पातयामास भूतले ।



धनेशं तद्धनुष्कोट्या कुट्टयामास कोपनः ॥ १६१ ॥
ततो देवनिकायानामेकैकं क्षणमात्रतः ।
तेषामेव जघानाऽसौ शस्त्रैर्बालान्यथा गुरुः ॥ १६२ ॥
लब्धसञ्ज्ञस्ततोविष्णुश्चक्रं जग्राह दुर्धरम् ।
दानवेन्द्रवसामेदोरुधिरेणाऽभिरञ्जितम् ॥ १६३ ॥
मुमोच दानवेन्द्रस्य दृढं वक्षसि केशवः ।
पपात चक्रं दैत्यस्य पतितं भास्करद्युति ॥ १६४ ॥
व्यशीर्यताऽथकायेऽस्यनीलोत्पलमिवाश्मनि ।
ततोवज्रंमहेन्द्रोऽपिप्रमुमोचार्चितंचिरम् ॥ १६५ ॥
तस्मिञ्जयाशा शक्रस्य दानवेन्द्राय संयुगे ।
तारकस्य च सम्प्राप्य शरीरं शौर्यशालिनः ॥ १६६ ॥
व्यशीर्यत विकीर्णार्चिः शतधा खण्डशो गतम् ।
ततो वायुरदीनात्मा वेगेन महता नदन् ॥ १६७ ॥
ज्वलितज्वलनाभासमङ्कुशं प्रमुमोच ह ।
विशीर्णं तस्य तच्चाऽङ्गे दृष्ट्वा वायुर्महारुषा ॥ १६८ ॥
ततः शैलेन्द्रमुत्पाट्य पुष्पितद्रुमकन्दरम् ।
चिक्षेप दानवेन्द्राय दशयोजनविस्तृतम् ॥ १६६ ॥
महीधरं तमायान्तं सस्मितं दैत्यपुङ्गवः । जग्राह वामहस्तेन बालःकन्दुकलीलया
ततस्तेनैव चाऽऽहत्य पातयामास चाऽन्तकम् ।
दण्डं ततः समुद्यम्य कृतान्तः क्रोधमूर्च्छितः ॥ २०१ ॥
दैत्येन्द्रमूर्ध्निचिक्षेपभ्राम्यवेगेनदुर्जयम्।सोऽसुरस्याऽपतन्मूर्ध्निदैत्यस्तंजगृहेस्मयन्
कल्पान्तलोकदहनो ज्वलनो रोषसंज्वलन् ।
शक्तिं चिक्षेप दुर्धर्षां दानवेन्द्राय संयुगे ॥ २०३ ॥
ततः शिरीषमालेवसाऽस्य वक्षस्यराजत ।

ततः खड्गं समाकृष्यकोशादाकाशनिर्मलम् ॥ २०४ ॥
द्युतिभासितत्रैलोक्यं लोकपालोऽपि निर्ऋतिः ।
चिक्षेप दानवेन्द्राय तस्य मूर्ध्नि पपात ह ॥ २०५ ॥
पतितश्चागमत्खड्गः स शीघ्रं शतखण्डताम् ।
जलेशश्च ततः क्रुद्धो महाभैरवरूपिणम् ॥ २०६ ॥
मुमोच पाशं दैत्येन्द्रभुजबन्धाभिलाषुकः ।
स दैत्यभुजमासाद्य पाशः सद्यो व्यपद्यत ॥ २०७ ॥
स्फुटितः क्रकचक्रूरदशनालिरहीश्वरः ।
ततोऽश्विनौ सचन्द्रार्कौ साध्याश्चवसवश्च ये ॥ २०८ ॥
यक्षराक्षसगन्धर्वाः सर्पाश्चास्त्रैः पृथग्विधैः ।
जघ्नुर्दैत्येश्वरं सर्वे भूयशस्ते महाबलाः ॥ २०९ ॥
न चास्त्राण्यस्यासज्जन्त गात्रे वज्राचलोपमे ।
ततो देवानवप्लुत्य तारको दानवाधिपः ॥ २१० ॥
जघान कोटिशः क्रुद्धोमुष्टिपार्ष्णिभिरेव च ।
तथाविधंतस्यवीर्यमालोक्य भगवान्हरिः ॥ २११ ॥
पलायध्वमहो देवा वदन्नन्तर्हितोऽभवत् ।
शक्रादयस्ततो देवाः पलायनकृतादराः ॥ २१२ ॥
कालनेमिमुखैर्दैत्यैरुपरुद्धा मदोत्कटैः ।
मुष्टिभिः पादघातैश्च केशेष्वाकृष्य तैर्मुदा ॥ २१३ ॥
तारिताः शुष्कसरितं देवमार्गाश्च दर्शिताः ।
बहुधा चाऽपकृष्यन्तलोकपालामहासुरैः ॥ २१४ ॥
ततो निनादः सञ्जज्ञे दैत्यानां बलशालिनाम् ।
कम्पयन्पृथिवीं द्यांच पातालानि च भारत ॥ २१५ ॥
जयेति मुदिता दैत्यास्तुष्टुवुस्तारकं तदा ।



शङ्खांश्च पूरयामासुः कुन्देन्दुसदृशप्रभान् ॥ २१६ ॥
धनुर्बाणरवांश्चोग्रान्कराघातांश्च चक्रिरे ।
भृशं हर्षान्विता दैत्या नेदुश्च ननृतुर्मुहुः ॥ २१७॥
ततोदेवान्पुरस्कृत्यपशुपालःपशूनिव । दैत्येन्द्रोरथमास्थाय जगाम सहितोऽसुरैः
महीसागरकूलस्थं तारकः स पुरं बली ।
योजनद्वादशायामं ताम्रप्राकारशोभितम् ॥ २१९ ॥
प्रासादैर्बहुभिःकीर्णंदिव्याश्चर्यैरुपशोभितम् । यत्रशब्दास्त्रयोनैवजीर्यंतेचानिशंपुरे
गीतघोषश्चव्याघोषोभुज्यन्तांविषयास्त्विवति ।
तत्प्रविश्य पुरं राजा जगाम स्वकमालयम् ॥ २२१ ॥
महोत्सवेन महता पुत्रस्त्रीप्रतिनन्दितः ।
तत्र दिव्यां सभां राजा प्राप्य सिंहासनस्थितः ॥ २२२ ॥
स्तूयमानोदितिसुतैरप्सरोभिर्विनोदितः। दिव्यासनस्थैर्दैत्येन्द्रैर्वृतःसिंहैरिवप्रभुः
एतस्मिन्नन्तरे काचिद्दिव्यस्त्री तत्पुरेऽभवत् ।
विस्मितस्तैर्वृतो दैत्यैः प्रोवाचेदं स्मयन्निव ॥ २२४ ॥
रूपेणानुपमापार्थ!नानाभरणभूषिता। तांदृष्ट्वातारकोराजाभृशंवैविस्मितोऽभवत्
काऽसि देवि ममब्रूहि किंमायारूपसुन्दरि।त्वत्समांयोषितंनैवदृष्टवन्तःपुरावयम्

स्त्र्युवाच

अहंत्रैलोक्यलक्ष्मीतिविद्धिमांदैत्यसत्तमअर्जितातपसाचास्मित्वयावीर्येणवाविभो
वीर्यवन्तं त्वनलसं तपस्विनमकातरम् ।
दातारं चाऽपि भोक्तारं युक्त्या सेवामि तं नरम् ॥ २२८ ॥
भीरुं निर्विण्णमत्यर्थं साध्वीपीडाकरं नरम् ।
सर्वातिशंकिनंसद्यस्त्यजामि दितिनन्दन ! ॥ २२९ ॥
महेन्द्रेण च माता ते यदा सा व्यपमानिता ।
तदैवत्यक्तप्रायोऽसाविदानीं तव सम्वशे ॥ २३० ॥

तारकश्च ततः प्राह परमं चेति तां तदा ।
सा चाऽऽविवेश तं देवी त्रिजगत्पूजिता रमा ॥ २३१ ॥
ततो दैत्याधिपं नार्यो दानवानां विभूषिताः ।
वीरकांस्यमुपादाय वर्धयांचक्रिरे मुदा ॥ २३२ ॥
देवाश्च द्वारि तिष्ठन्ति बद्धा दैत्यैर्भृशातुराः ।
उपहास्यमानानारीभिर्दैत्यैरन्यैश्चनागरैः ॥ २३३ ॥
एतस्मिन्नन्तरे विष्णुर्दैत्यरूपं समास्थितः ।
उपहासकमध्यस्थो गाथे द्वे प्राहबुद्धिमान् ॥ २३४ ॥
इदमल्पतरं नाम यदमी षां च दृश्यते ।
मातृक्रोधं स्मरन्राजा किं किं यन्न करिष्यति ॥ २३५ ॥
बलीयांसंसमासाद्यननेमेद्योचकास्तिसःमर्कवच्छ्वेतबाकीयैरुपायैःस्थीयतांसुरा
उपहासमुखेनाऽमी उपदेशं हरेर्मुखात् ।
समाकर्ण्य ततो देवा मर्करूपेण संस्थिताः ॥ २३७ ॥
नृत्यन्तस्ते च बहुधा दैत्याश्चासुरयोषितःभृशंचनोदयामासुर्मुदाभोज्यानितेददुः
विष्णुर्दैत्यप्रतीहारं ततः प्रोवाच बुद्धिमान् ।
विनोदाय महाराज्ञो मर्कामेतान्प्रकीर्तय ॥ २३९ ॥
प्रतीहारस्ततो हृष्टः सभामध्येविवेश सः ।
जानुभ्यांधरणींगत्वाबद्ध्वाचकरसम्पुटम् ॥ २४० ॥
उवाचाऽनाविलंवाक्यमल्पाक्षरपरिस्फुटम् ।
दैत्येन्द्रंमर्कवृन्दानि द्वारि तिष्ठंति ते प्रभो ॥ २४१ ॥
भृशं विनोदकारीणि स्पृहा चेद्द्रष्टुमर्हसि ।
तन्निशम्याऽब्रवीद्राजाकिंचिरंक्रियतेत्वया ॥ २४२ ॥
क्षत्ताचेतिवचः श्रुत्वाकालनेमिंतदाब्रवीत् ।
मर्कानेतान्महाराजो द्रष्टुमिच्छतिशीघ्रतः ॥ २४३ ॥



रक्षपाल सहैभिस्त्वं राजानमनुकूलय ।
कालनेमिरुपादाय मर्कान्यातो नृपं ततः ॥ २४४ ॥
मर्कमध्ये विष्णुमर्को यतस्त्यक्त्वा च दैत्यताम् ।
ततस्तारकदैत्यस्यपुरतोननृतुर्भृशम् ॥ १४५ ॥
मर्कादैत्यकरोत्तालैर्हर्षनादविनोदितैः । ततोऽतिमुदितोराजातेषांनृत्येनसोऽब्रवीत्
अभयं वो मर्कदेवास्तुष्टो यच्छाम्यहं त्विदम् ।
मद्गृहे स्थीयतामेव न च कार्यं भयं हृदि ॥ २४७ ॥
इतिश्रुत्वाविष्णुमर्कःप्रनृत्यन्निदमब्रवीत्।राजान्विज्ञातुमिच्छामस्तवगेहावधिंवयम्
एवमुक्तो प्रहस्याऽऽह तारको दैत्यसत्तमः ।
त्रिभूमिकं हि मे गेहमिदं यद्भुवनत्रयम् ॥ २४९ ॥
हरिमर्कस्ततः प्राह यद्येवं स्वं वचः स्मर ।
त्रैलोक्ये विचरन्त्वेते मर्काराजन्सुनिर्भयाः ॥ २५० ॥
अश्वमेधशतस्यापिसत्यंराजन्विशिष्यते ।
धर्ममेनं स्मरन्सत्यं वचनं कुरु दैत्यप ॥ २५१ ॥
ततःसुविस्मितोदैत्यःप्राहेदंवचनंतदा । मर्कटाऽहोप्रबुद्धोऽसिसत्यंब्रूहिचकोभवान्

श्रीभगवानुवाच

अहं नारायणोनाम यदि श्रोत्रमुपागतः देवानां रक्षणार्थाय मर्करूपमुपाश्रितः ॥
तच्चेन्मान्यतमोधर्मस्तव तद्वचनं स्वकम् ।
परिपालय ते गेहं विचरन्तु सुरास्त्वमी ॥ १५४ ॥
अवलेपश्च राजेन्द्र न कर्तव्यस्त्वया हृदि ।
वीरोऽहमितिसञ्चिन्त्य पश्यतां कालजं बलम् ॥ २५५ ॥
पर्यायैर्हन्यमानामभिहन्ता न विद्यते । मौढ्यमेतत्तुयद्द्वेष्टा कर्ताहमितिमन्यते ॥
ऋषींश्च देवांश्च महासुरांश्च त्रैविद्यवृद्धांश्च वने मुनींश्च ।
कं वाऽऽपदो नोपनमन्ति काले कालस्य वीर्यं न तु कर्तुरेतत् ॥ २५७ ॥

न मन्त्रबलवीर्येण प्रज्ञयापौरुषेणवा । अलभ्यंलभ्यतेकालेकाले सुतोऽपिचिन्दति
न मातृपितृशुश्रूषा न च दैवतपूजनम् ।
नान्यो गुणसमाचारः पुरुषस्य सुखावहः ॥ २५९ ॥
न विद्या न तपोदानं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ २६० ॥
नागामिगमनार्थं हि प्रतिघातशतैरपि ।
शक्नुवन्ति प्रतिव्योढुमृतेकालबलं नराः ॥ २६२ ॥
देहवत्पुण्यकर्माणि जीववत्कालउच्यते ।
द्वयोः समागमेदैत्य ! कार्याणां सिद्धिरिष्यते ॥ २६३ ॥
अहो दैत्य त्वद्विशिष्टादैत्यानांकोटयःपुरा ।
शाल्मलेस्तूलवत्क्षिप्ताः कालवातेनदुर्दशाः ॥ २६४ ॥
इदं तु लब्ध्वा त्वं स्थानमात्मानंबहु मन्यसे ।
सर्वभूतभवं देवं ब्रह्माणमिव शाश्वतम् ॥ २६५ ॥
नचेदमचलंस्थानमनन्तंचाऽपिकस्यचित्। त्वंतुबालिशदाबुद्ध्याममेदमितिमन्यसे
अविश्वास्ये विश्वसिषि मन्यसे चाऽध्रुवं ध्रुवम् ।
ममेदमिति मोहात्त्वं त्रिलोकीश्रियमीप्ससि ॥ १६६ ॥
नेयं तवनचास्माकंनचान्येषांस्थिरामता ।
अतिक्रम्य बहूनन्यांस्त्वयितावदियंस्थिता ॥ २६७ ॥
कञ्चित्कालमियं स्थित्वा त्वयि तारक चञ्चला ।
पुंश्चलीवाऽतिचपलापुनरन्यं गमिष्यति ॥ २६८ ॥
सरत्नौषधिसम्पन्नं ससरित्पर्वताकरम् ।
तानिदानीं न पश्यामि यैर्भुक्तं भुवनत्रयम् ॥ २६९ ॥
हिरण्यकशिपुर्वीरो हिरण्याक्षश्च दुर्जयः ।
प्रह्रादोनमुचिर्वीरो विप्रचित्तिर्विरोचनः ॥ २७० ॥



कीर्तिः शूरश्च वीरश्च वातापिरिल्वलस्तथा ।
अश्वग्रीवः शम्बरश्च पुलोमा मधुकैटभौ ॥ २७१ ॥
विश्वजितप्रमुखाश्चाऽन्येदानवेन्द्रामहाबलाः ।
कालेन निहताःसर्वे कालोहिबलवत्तरः ॥ २७२ ॥
सर्वे यथार्हदातारः सर्वे दाक्षायणीसुताः ।
ज्वलन्तः प्रजयन्तश्च कालेन प्रतिसंहताः ॥ २७३ ॥
मुञ्चेच्छांकालभोगेषुमुञ्चेमंश्रीभवंमदम् ।एतदैश्वर्यनाशेत्वांशोकःसम्पीडयिष्यति
शोककाले शुचो मा त्वं हर्षकाले च मा हृषः ।
अतीतानागते हि त्वा प्रत्युत्पन्नेन वर्तय ॥ २७५ ॥
इन्द्रं चेदागतःकालःसदायुक्तमतन्द्रितम् । क्षमस्वनचिराद्दैत्यत्वामप्युपगमिष्यति
को हि स्थातुमलं लोके ममक्रुद्धस्य संयुगे ।
कालस्तुबलवान्प्राप्तस्तेनतिष्ठामि तारक ॥ २७७ ॥
त्वमेव वेत्सि मांदैत्ययोऽहंयाद्दक्पराक्रमः ।
कल्पे कल्पे महादैत्याः कोटिशोऽर्बुदशोहताः ॥ २७८ ॥
येषां त्वंकोटिभागेऽपिपरिपूर्णोनतारक ! कल्पेकल्पेसृजामीदंब्रह्मादिसकलंजगत्
इच्छयासञ्जीवयाम्येतदनिच्छन्नाशये क्षणात् ।
न हि त्वां नोत्सहे हन्तुं सर्वदैत्यसमायुतम् ॥ २८१ ॥
अङ्गुल्यग्रेण दैत्येन्द्र पुनर्धर्मं न लोपये । यद्यहं प्रवरो भूत्वा धर्मं ब्रह्मवरात्मकम् ॥
लोपयामि ततः कं च धर्मोऽयं शरणं व्रजेत् ।
अहंकर्तेतिमा मंस्थाःकर्ता यस्तु सदाप्रभुः ॥ २८३ ॥
सोऽयं कालः पचेद्विश्वंवृक्षेफलमिवागतम् ।
यैरेव कर्मभिः सौख्यंदुखं तैरेवकर्मभिः ॥ २८४ ॥
प्राप्नोति पुरुषो दैत्य पश्य कालस्य चित्रताम् ।
सर्वं कालवशादेवबोद्धव्यंधीयुतैर्नरैः ॥ २८५ ॥

स्वकर्मपरिपाकस्यफलदं वै विदुर्बुधाः।
तस्मात्कर्मशुभं कार्यंपुण्यात्पुण्यात्मकंचयत् ॥ २८६ ॥
पुण्येनतत्रसौख्यंस्याद्दुःखंपापेननिश्चितम्।इतिनिश्चित्यदैत्येन्द्रस्वंवचःपरिपालय
मदुक्तं वचनं सर्वं यदि मन्तुमिहाऽर्हसि ॥ २८७ ॥

तारक उवाच

मामत्र संस्थितं दृष्ट्वा कालनेमिमुखैर्युतम् ॥ २८८ ॥
कस्येह न व्यथेद्बुद्धिर्मृत्योरपिजिघांसतः सातेनव्यथतेबुद्धिरचलातत्त्वदर्शिनी
ब्रवीषि वाक्यंयच्चत्वंतत्तथैव न संशयः।
को हि विश्वासमर्थेषु शरीरे वा शरीरभृत् ॥ २६० ॥
कर्तुमुत्सहते लोके दृष्ट्वा संप्रस्थितं जगत्।
अहमप्येवमेवैनं लोकं जानाम्यशाश्वतम् ॥ २६१ ॥
कालाग्नावाहितं घोरे गुह्ये सततगत्वरे।
इदमद्यकरिष्यामि श्वः कर्ताऽस्मीतिवादिनः ॥ २६२ ॥
कालो हरति संप्राप्ते नदीवेग इवोन्मुखान्।
इदानीं तावदेवासौमया दृष्टोनविस्मृतः ॥ २६३ ॥
कालेनह्रियमाणानां प्रलापः श्रूयते नृणाम्।
ईर्ष्याभिमानलोभेषु कामक्रोधभयेषु च ॥ २६४ ॥
स्पृहामोहातिवादेषुलोकः सक्तो न बुध्यते।
गुरुम्वाऽप्यगुरुम्वापिकृत्याकृत्यं च केशव ॥ २६५ ॥
जानामित्वामहंविष्णोसर्वभूतवरंप्रभुम्। किंकुर्मःस्वस्वभावेनबलिनात्वांनमन्महे
केचिद्व्रजन्ति त्वां भक्त्या वैरेण हेलया परे।
सर्वेऽनुकम्प्यास्तेतुभ्यमन्तरात्माऽसि देहिनाम् ॥ २६७ ॥
पुराणःशाश्वतोधर्मःसर्वप्राणभृतांसमः। मामालम्ब्यमयामुक्तायान्तुसर्वेदिवौकस
पुनर्मर्कस्वरूपेण भ्रान्तव्यं भुवनत्रयम्।



स्पृहाऽपि यज्ञभागानां न कार्या समयस्त्वयम् ॥ २६८ ॥
एवमुक्ते तारकेण देवा हर्षं प्रपेदिरे।
मुच्यते हृतलोमाऽपि मेषो लाभो हि सैनिकात् ॥ २६६ ॥

श्रीभगवानुवाच

दैत्येन्द्र भवतस्त्वज्ञोविद्याज्ञानतपोन्वितः कालंपश्यसिसुव्यक्तंपाणावामलकंयथा
कालचारित्रतत्त्वज्ञ शिवभक्तमहामते।
वज्राङ्गसुत धन्योऽसि स्पृहणीयोऽसि धीमताम् ॥ ३०१ ॥
यावत्ते तपसो वीर्यंतावद्भुङ्क्ष्वजगत्त्रयम्।
एतेन समयेनैते चरिष्यन्ति सुरा जगत् ॥ ३०२ ॥
इत्युक्त्वामर्कयूथेन वृतो नारायणः प्रभुः।
स्थानादस्मादपाक्रम्य मेरुम्प्रति ययौ तदा ॥ ३०३ ॥
ततो मेरुं समागम्य प्रोवाच वचनंहरिः।
भवन्तो यान्तु ब्रह्माणं स धास्यति च वो हितम् ॥ ३०४ ॥
अप्रमत्तैःसदाभाव्यंपालयश्चसमयस्तथाइत्युक्त्वाभगवान्विष्णुस्तत्रैवाऽन्तरधीयत
प्रणतः संस्तुतो देवैर्ब्रह्माणं च सुरा ययुः ॥ ३७ ॥
दिव्योत्तमैस्तत्रगतैरभिष्टुतो विदीप्ततेजा भुवनत्रयेऽपि।
वज्राङ्गपुत्रोऽपि मुमोद वीरः शिवप्रसादेन महर्द्धिमाप्य ॥ ३०८ ॥
स्वयमिन्द्रोनिमिर्वह्निःकालनेमिर्यमोऽपिच।
स्तम्भश्चनिर्ऋतिस्थानेमहिषोवरुणस्तथा ॥ ३०६ ॥
मेषो वाताधिकारी च कुजम्भो धनदोऽभवत्।
अन्येषां चाऽधिकारांश्च दैत्यानां तारको ददौ ॥ ३१० ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डेदेवासुरसङ्ग्रामेतारकविजयवर्णनंनामैकविंशतितमोऽध्याय २१

---

# द्वाविंशतितमोऽध्यायः

## कुमारेशमाहात्म्येपार्वतीजन्मवर्णनम्

नारद उवाच

एवं विप्रकृता देवामहेन्द्रसहितास्तदा । ययुःस्वायम्भुवंधाम मर्करूपमुपाश्रिताः
ततश्च विस्मितो ब्रह्मा प्राह तान्सुरपुङ्गवान् ।
स्वरूपेणेह तिष्ठध्वं नात्रवस्तारकाद्भयम् ॥ २ ॥
ततोदेवाः स्वरूपस्थाः प्रम्लानवदनाम्बुजाः ।
तुष्टुवुः प्रणताःसर्वे पितरं पुत्रका यथा ॥ ३ ॥
नमो जगत्प्रसूत्यै ते हेतवे पालकाय च ।
संहर्त्रे च नमस्तुभ्यं तिस्रोऽवस्थास्तवप्रभो ॥ ४ ॥
त्वमपः प्रथमं सृष्ट्वा तासु वीर्यमवासृजः ।
तदण्डमभवद्धैमं यस्मिँल्लोकाश्चराचराः ॥ ५ ॥
वेदेष्वाहुर्विराड्रूपं त्वामेकरूपमीदृशम् ।
पातालं पादमूलं च पार्ष्णिपादे रसातलम् ॥ ६ ॥
महातलं चाऽस्य गुल्फौ जंघेचाऽपितलातलम् ।
सुतलं जानुनी चास्य ऊरूचवितलातले ॥ ७ ॥
महीतलं च जघनं नाभिश्चास्यनभस्तलम् ।
ज्योतिःपदमुरःस्थानंस्वर्लोकोबाहुरुच्यते ॥ ८ ॥



ग्रीवा महश्चवदनं जनलोकः प्रकीर्त्यते । ललाटं च तपोलोकः शीर्षःसत्यमुदाहृतम्
चन्द्रसूर्यौ च नयने दिशः श्रोत्रे नासिकाश्विनौ ।
आत्मानं ब्रह्मरन्ध्रस्थमाहुस्त्वां वेदवादिनः ॥ १० ॥
एवं येतेविराड्रूपंसंस्मरन्तउपासते । जन्मबन्धविनिर्मुक्ता यान्तित्वांपरमंपदम्
एवं स्थूलं प्राणिमध्यं च सूक्ष्मं भावेभावे भावितं त्वां गृणन्ति ।
सर्वत्रस्थं त्वामतः प्राहुर्वेदास्तस्मै तुभ्यं पद्मज ! इद्धिधेम ॥ १२ ॥
एवं स्तुतो विरञ्चिस्तु कृपयाऽभिपरिप्लुतः जानन्नपितदाप्राह तेषामाश्वासहेतवे
सर्वेभवन्तोदुःखार्ताःपरिम्लानमुखाम्बुजाः ।
भ्रष्टायुधास्तथाऽकस्माद्भ्रष्टाभरणवाससः ॥ १४ ॥
ममैवेयं कृतिर्देवा भवतां यद्विडम्बना ।
यद्वैराजशरीरे मे भवन्तो बाहुसञ्ज्ञकाः ॥ १५ ॥
यद्यद्विभूतिमत्सत्त्वं धार्मिकं चोर्जितं महत् ।
तत्रासीद्बाहुनाशो मे बाहुस्थाने च ते मम ॥ १६ ॥
तन्नूनं मम भग्नौ च बाहू तेन दुरात्मना ।
येन चोपहृतं देवास्तन्ममाख्यातुमर्हथ ॥ १७ ॥

देवा ऊचुः

योऽसौवज्राङ्गतनयस्त्वयादत्तवरःप्रभो । भृशंविप्रकृतास्तेन तत्त्वंजानासितत्त्वतः
यत्तन्महीसमुद्रस्य तटं शार्विकतीर्थकम् ।
तदाक्रम्य कृतं तेन मरुभूमिसमं प्रभो ॥ १९ ॥
ऋद्धयः सर्वदेवानां गृहीतास्तेन सर्वतः ।
महाभूतस्वरूपेण स एव च जगत्पतिः ॥ २० ॥
चन्द्रसूर्यौ ग्रहास्तारा यच्चान्यद्देवपक्षतः ।
तच्च सर्वं निराकृत्य स्थापितो दैत्यपक्षकः ॥ २१ ॥
वयं च विधृतास्तेन बहूपहसितास्तथा ।

विष्णोः प्रसादान्मुक्ताश्च कथञ्चिदिह कष्टतः ॥ २२ ॥
तद्वयं शरणं प्राप्ताः पीडिताः क्षुत्तृषार्दिताः ।
धर्मरक्षाकराश्चेति सञ्चिन्त्य त्रातुमर्हसि ॥ २३ ॥
इत्युक्तः स्वात्मभूर्देवः सुरैर्दैत्यविचेष्टितम् ।
सुरानुवाच भगवानतः सञ्चिन्त्य तत्त्वतः ॥ २४ ॥
अवध्यस्तारको दैत्यः सर्वैरपि सुरासुरैःयस्यवध्यश्चनाद्यापिसजातोभगवान्पुनः
मया च वरदानेन च्छन्दयित्वा निवारितः ॥ २६ ॥
तपसासहि दीप्तोऽभूत्त्रैलोक्यदहनात्मकः । सचवव्रेवधंदैत्यःशिशुतःसप्तवासरात्
स च सप्तदिनो बालः शङ्कराद्यो भविष्यति ।
तारकस्य च वीरस्यवधकर्ताभविष्यति ॥ २८ ॥
सतीनामा तु या देवी विनष्टा दक्षहेलया ।
सा भविष्यति कल्याणीहिमाचलशरीरजा ॥ २९ ॥
शङ्करस्य च तस्याश्च यत्नः कार्य समागमे ।
अहमप्यस्य कार्यस्य शेषंकर्त्ता न संशयः ॥ ३० ॥
इत्युक्तास्त्रिदशास्तेन साक्षात्कमलयोनिना ।
जग्मुर्मेरुं प्रणम्येशं मर्करूपेण सम्वृताः ॥ ३१ ॥
ततोगतेषुदेवेषुब्रह्मालोकपितामहः । निशां सस्मारभगवान्स्वां तनुं पूर्वसम्भवाम्
ततो भयवती रात्रिरुपतस्थे पितामहम् ।
तां विविक्ते समालोक्य तथोवाच विभावरीम् ॥ ३३ ॥
विभावरि महत्कार्यं विबुधानामुपस्थितम् ।
तत्कर्तव्यं त्वया देवि शृणु कार्यस्य निश्चयम् ॥ ३४ ॥
तारकोनाम दैत्येन्द्रः सुरकेतुरनिर्जितः ।
तस्याभावाय भगवाञ्जनिष्यति यं शिवः ॥ ३५ ॥
सुतः स भविता तस्य तारकस्यान्तकारकः ।



अहं त्वादौ यदाजातस्तदापश्यंपुरःस्थितम् ॥ ३६ ॥
अर्धनारीश्वरं देवं व्याप्य विश्वमवस्थितम् ।
दृष्ट्वा तमब्रुवं देवं भजस्वेति च भक्तितः ॥ ३७ ॥
ततो नारी पृथग्जाता पुरुषश्च तथा पृथक् ।
तस्याश्चैवांशजाःसर्वाःस्त्रियस्त्रिभुवनेस्मृताः ॥ ३८ ॥
एकादश च रुद्राश्च पुरुषास्तस्य चांशजाः ।
तां नारीमहमालोक्य पुत्रं दक्षमथाब्रवम् ॥ ३९ ॥
भजस्व पुत्रीं जगती ममापि च तवापि च ।
पुंदुःखनरकात्त्रात्रीपुत्रीतेभाविनीत्वियम् ॥ ४० ॥
एवमुक्तो मया दक्षःपुत्रीत्वेपरिकल्पिताम् ।
रुद्राय दत्तवान्भक्त्यानामदत्त्वासतीतियत् ॥ ४१ ॥
ततः काले च कस्मिंश्चिदवमेने च तां पिता ।
मुमूर्षुः पापसङ्कल्पो दुरात्माकुलकज्जलः ॥ ४२ ॥
ये रुद्रंनैवमन्यन्तेतेस्फुटंकुलकज्जलाः । पिशाचास्तेदुरात्मानोभवन्तिब्रह्मराक्षसाः
अवमानेन तस्याऽपि यथा देवी जहौ तनुम् ।
यथा यज्ञः स च ध्वस्तो भवेन विदितं हि ते ॥ ४४ ॥
अधुनाहिमशैलस्यभवित्रीदुहिताचसा । महेश्वरंपतिंसाचपुनःप्राप्स्यतिनिश्चितम्
तदिदं च त्वया कार्यं मेनागर्भे प्रविश्यच ।
तस्याश्छविं कुरुकृष्णांयथाकाली भवेत्तु सा ॥ ४६ ॥
तदा रुद्रोपहसिता तपस्तप्स्यति सा महत् ।
समाप्तनियमा देवी यदावोग्रा भविष्यति ॥ ४७ ॥
स्वयमेव यदा रूपं सुगौरं प्रतिपत्स्यते ।
विरहेण हरश्चास्य मत्वा शून्यं जगत्त्रयम् ॥ ४८ ॥
तस्यैव हिमशैलस्य कन्दरे सिद्धसेविते ।

प्रतीक्षमाणस्तां देवीमुग्रं सन्तप्स्यते तपः ॥ ४६
तयोः सुतस्ततपसोर्भविता यो महासुतः भविष्यतिसदैतस्यतारकस्यनिवारकः ॥
तपसो हि विना नास्ति सिद्धिः कुत्राऽपि शोभने ! ।
सर्वासां कर्मसिद्धीनां मूलं हि तप उच्यते ॥ ५१ ॥
त्वयाऽपिदानवोदेविदेहनिर्गतयातदा । चण्डमुण्डपुरोगाश्चहन्तव्यालोकदुर्जयाः
यस्माच्चण्डश्च मुण्डंच त्वं देवि निहनिष्यसि ।
चामुण्डेतितथोलोकेख्यातादेविभविष्यसि ॥ ५२ ॥
ततस्त्वांवरदेदेविलोकःसम्पूजयिष्यति।भेदैर्बहुविधाकारैःसर्वांगांकामसाधनीम्
ॐकारवक्त्रां गायत्रीं त्वामर्चन्ति द्विजोत्तमाः ।
ऊर्जितां बलदां चाऽपि राजानः सुमहाबलाः ॥ ५५ ॥
वैश्याश्चभूतिमित्येवशिवांशूद्रास्तथाशुभेक्षान्तिर्मुनीनामक्षोभ्यादयानियमिनामपि
त्वं महोपायसन्दोहा नीतिर्नयविसर्पिणाम् ।
परिस्थितिस्त्वमर्थानां त्वमहो प्राणिकामता ॥ ५७ ॥
त्वंयुक्तिः सर्वभूतानांत्वंगतिःसर्वदेहिनाम् ।
रतिस्त्वंरतिचित्तानांप्रीतिस्त्वंहृदयदर्शिनाम् ॥ ५८ ॥
त्वं कान्तिः शुभरूपाणां त्वं शान्तिः शुभकर्मिणाम् ।
त्वं भ्रान्तिर्मूढचित्तानां त्वं फलं क्रतुयाजिनाम् ॥ ५९ ॥
जलधीनां महावेला त्वं च लीलाविलासिनाम् !
सम्भूतिस्त्वं पदार्थानां स्थितिस्त्वं लोकपालिनी ॥ ६० ॥
त्वंकालरात्रिर्निःशेषभुवनावलिनाशिनी । प्रियकण्ठग्रहानन्ददायिनीत्वंविभावरी
प्रसीद प्रणतानस्मान्सौम्यदृष्ट्या विलोकय ॥ ६२ ॥
इतिस्तुवन्तोयेदेविपूजयिष्यन्तित्वांशुभेतेसर्वकामानाप्स्यन्तिनियतानात्रसंशयः
इत्युक्तातु निशा देवी तथेत्युक्त्वा कृताञ्जलिः ।
जगाम त्वरितापूर्वं गृहं हिमगिरेर्महत् ॥ ६३ ॥



तत्राऽऽसीनां महाहर्म्ये रत्नभित्तिसमाश्रये ।
ददर्शमेनामापाण्डुच्छविवक्त्रसरोरुहाम् ॥ ६४ ॥
किञ्चिच्छ्यामसुखोदग्रस्तनभागावनामिताम् ।
महौषधिगणाबद्धमन्त्रराजनिषेविताम् ॥ ६५ ॥
ततः किञ्चित्प्रमिलिते मेनानेत्राम्बुजद्वये ।
आविवेश मुखं रात्रिर्ब्रह्मणो वचनात्तदा ॥ ६६ ॥
जन्मदाया जगन्मातुः क्रमेणजठरान्तरम् ।
अरञ्जयच्छविं देव्या गुहमातुर्विभावरी ॥ ६७ ॥
ततो जगन्मङ्गला मेना हिमगिरेः प्रिया ।
ब्राह्मे मुहूर्ते सुभगे प्रासूयत शुभाननाम् ॥ ६८ ॥
तस्यां तु जायमानायां जन्तवःस्थाणुजङ्गमाः ।
अभवन्सुखिनःसर्वे सर्वलोकनिवासिनः ॥ ६९ ॥
अभवत्क्रूरसत्त्वानां चेतः शान्तं च देहिनाम् ।
ज्योतिषामपितेजस्त्वमभवत्सुतरांतदा ॥ ७० ॥
वानाश्रिताश्चोषधयः स्वादुवन्तिफलानिच ।
गन्धवन्ति च माल्यानि विमलंचनभोऽभवत् ॥ ७१ ॥
मारुतश्च सुखस्पर्शो दिशश्च सुमनोहराः ।
विस्मृतानि च शास्त्राणि प्रादुर्भावं प्रपेदिरे ॥ ७२ ॥
प्रभावस्तीर्थमुख्यानांतदा पुण्यतमोऽभत् ।
सर्वेषामभवच्छ्रद्धा जन्मकाले गुहारणेः ।
अन्तरिक्षेऽमराश्चापि प्रहर्षोत्फुल्ललोचनाः ॥ ७४ ॥
हरिब्रह्ममहेन्द्रार्कवायुवह्निपुरोगमाः ।
मेरुप्रभृतयश्चाऽपिमूर्तिमन्तोमहानगाःतस्मिन्महोत्सवेप्राप्तावीरकांस्योपशोभिता
सागराः सरितश्चैव समाजग्मुश्च सर्वशः ॥ ७८ ॥

हिमशैलोऽभवल्लोके तदा सर्वैश्चराचरैः । सेव्यश्चाप्यभिगम्यश्च पूजनीयश्च भारतः!

अनुभूयोत्सवं ते च जग्मुः स्वानालयांस्तदा ॥ ८० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कोमारिकाखण्डे कुमारेशमाहात्म्ये पार्वतीजन्मवर्णनं नाम द्वाविंशोऽध्यायः ॥

---

# त्रयोविंशोऽध्यायः

## कुमारेशमाहात्म्ये नारदेन पर्वतपुत्रींदृष्ट्वा सामुद्रिकशास्त्रदृष्ट्याभविष्यकथनं पश्चाच्चहिमवतेआश्वासनवर्णनम्

नारद उवाच

ततश्च शैलजा देवी चिक्रीड सुभगा तदा । देवगन्धर्वकन्याभिर्नगकिन्नरसम्भवाः

मुनीनां चापि याः कन्यास्ताभिः सार्धं च शोभना ॥ १ ॥

कदाचिदथमेरुस्थो वासवःपाण्डुनन्दन! सस्मारमांययौचाहंसंस्मृतोवासवंतदा

मां दृष्ट्वा च सहस्राक्षःसमुत्थायाऽतिहर्षितः ।

पूजयामास तां पूजां प्रतिगृह्याऽहमब्रवम् ॥ ३ ॥

महासुरमहोन्मादकालानल दिवस्पते !

कुशलं विद्यते कश्चित्तव कच्चिच्च नन्दसि ॥ ४ ॥

पृष्टस्त्वेवं मया शक्रः प्रोवाच वचनंस्मयन् ।

कुशलस्याङ्कुरस्तावत्सम्भूतो भुवनत्रये ॥ ५ ॥



तत्फलोदयसम्पत्तौ तद्भावान्संस्मृतोमुनेवेत्सिसर्वमतं त्वंवै तथापिपरिनोदकः ॥

निर्वृतिं परमां याति निवेद्यार्थं सुहृज्जने ॥ ७ ॥

तद्वचाञ्छैलजां देवीं शैलेन्द्रं शैलवल्लभाम् । हरंसम्भावयवरं यन्नान्यं रोचयन्तिते

ततस्तद्वाक्यमाकर्ण्य गतोऽहं शैलसत्तमम् ।

ओषधिप्रस्थनिलयंसाक्षादिव दिवस्पतिम् ॥ ९ ॥

तत्र हैमे स्वयं तेन महाभक्त्या निवेदिते ।

महासने पूजितोऽहमुपविष्टो महासुखम् ॥ १० ॥

गृहीतार्घ्यं ततो मां च पप्रच्छ श्लक्ष्णयागिराकुशलंतपसःशैलःशनैःफुल्लाननाम्बुजः

अहमप्यस्य तत्प्रोच्य प्रत्यवोचं गिरीश्वरम् ।

त्वया शैलेन्द्र पूर्वां वाऽप्यपरां च दिशं तथा ॥ १२ ॥

अवगाह्यस्थितवताक्रियतेप्राणिपालना।अहोधन्योऽसिविप्रेन्द्राःसाहाय्येनतवाचल

तपोजपव्रतस्नानैः साधयन्त्यात्मनः परम् ।

यज्ञाङ्गसाधनैःकांश्चित्कन्दादिफलदानतः ॥ १४ ॥

त्वं समुद्धरसि विप्रान्किमतः प्रोच्यते तव ।

अन्येऽपिजीवा बहुधात्वामुपाश्रित्य भूधर ! ॥ १५ ॥

मुदिताः प्रतिवर्तन्ते गृहस्थमिव प्राणिनः ।

शीतमातपवर्षांश्चक्लेशान्नानाविधान्सहन् ॥ १६ ॥

उपाकरोषि जन्तूनामेवंरूपा हि साधवः ।

किमतः प्रोच्यते तुभ्यं धन्यस्त्वं पृथिवीधर ! ॥ १७ ॥

कन्दरं यस्य चाऽध्यास्ते स्वयंतव महेश्वरः ।

इत्युक्तवति वाक्यं च यथार्थं मयि फाल्गुन ॥ १८ ॥

हिमशैलस्य महिषीमेना आगाद्दिदृक्षया ।

अनुयाता दुहित्री च स्वल्पाश्च परिचारिकाः ॥ १९ ॥

लज्जयानतसर्वाङ्गी प्रविवेश सदो महत् ।

ततो मां शैलमहिषी ववन्दे प्रणिपत्य सा ॥ २० ॥
वस्त्रनिगूढवदना पाणिपद्मकृताञ्जलिः ।
तामहं सत्यरूपाभिराशीर्भिः समवर्धयम् ॥ २१ ॥
पतिव्रता शुभाचारा सुभगा वीरसूः शुभे !
सदा वीरवती चाऽपि भव वंशोन्नतिप्रदे ! ॥ २२ ॥
ततोऽहं विस्मिताक्षीं च हिमवद्गिरिपुत्रिकाम् ।
मृदुवाण्या प्रत्यवोचमेहि बाले ! ममाऽन्तिकम् ॥ २३ ॥
ततोदेवीजगन्माताबालभावंस्वकंमयि । दर्शयन्तीस्वपितरंकण्ठेगृह्याङ्कमाविशत्
उवाच वाचं तां मन्दं मुनिं वन्दय पुत्रिके ! ।
मुनेः प्रसादतोऽवश्यं पतिमाप्स्यसि सम्मतम् ॥ २५ ॥
इत्युक्ता सा ततोबाला वस्त्रान्तपिहितानना ।
किञ्चित्सहुंकृतोत्कम्पं प्रोच्य नोवाच किञ्चन ॥ २६ ॥
ततो विस्मितचित्तोऽहमुपचारविदाम्वरः ।
प्रत्यवोचं पुनर्देवीमेहि दास्यामि ते शुभे ॥ २७ ॥
रत्नक्रीडनकं रम्यं स्थापितं सुचिरं मया ।
इत्युक्ता सा तदोत्थाय पितुरङ्कात्सवेगतः ॥ २८ ॥
वन्दमानाचमेपादौमयानीताङ्कमात्मनः। मन्यतातांजगत्पूज्यामुक्तंबालेतवोचितम्
न तत्पश्यामि तत्तुभ्यं दद्म्याशीः का तवोचिता ।
इत्युक्ते मातृवात्सल्याच्छैलेन्द्रमहिषी तदा ॥ ३० ॥
नोदयामास मां मन्दमनाशीः शङ्कितातदा। भगवन्वेत्सिसर्वंत्वमतीतानागतंप्रभो
तदहं ज्ञातुमिच्छामि कीदृशोऽस्याःपतिर्भवेत् ।
श्रुत्वेति सस्मितमुखःप्रावोचं नर्मवल्लभः ॥ ३२ ॥
न जातोऽस्याःपतिर्भद्रेवर्ततेचकुलक्षणः । नग्नोऽतिनिर्धनःक्रोधीवृतःक्रूरैश्चसर्वदा
श्रुत्वेति सम्भ्रमाविष्टो ध्वस्तवीर्यो हिमाचलः ।



मां तदा प्रत्युवाचेदं साश्रुकण्ठो महागिरिः ॥ ३४ ॥
अहोविचित्रः संसारोदुर्वेद्यो महतामपि । प्रवरस्त्वपि शक्त्या यो नरेषु कृपायते
यत्नेन महता तावत्पुण्यैर्बहुविधैरपि ।
साधयत्यात्मनो लोको मानुष्यमतिदुर्लभम् ॥ ३६ ॥
अध्रुवं तद्ध्रुवत्वे च कथञ्चित्परिकल्प्यते ।
तत्राऽपि दुर्लभानाम समानव्रतचारिणी ॥ ३७ ॥
साध्वी महाकुलोत्पन्ना भार्या या स्यात्पतिव्रता ।
तत्रापि दुर्लभं यच्च तया धर्मनिषेवणम् ॥ ३८ ॥
सह वेदपुराणोक्तं जगत्त्रयहितावहम् ।
एतत्सुदुर्लभं यच्च तस्यां चैव प्रजायते ॥ ३९ ॥
तदपत्यमपत्यार्थं संसारे किल ! नारद ।
एतेषां दुर्लभानां हि किञ्चित्प्राप्नोति पुण्यवान् ॥ ४० ॥
सर्वमेतदवाप्नोति स कोऽपि यदि वा न वा ।
किञ्चित्केनाऽपिहिन्यूनंसंसारःकुरुतेनरम् ॥ ४१ ॥
अथ सांसारिको दोषःस्वकृतं यत्र भुज्यते ।
गार्हस्थ्यं च प्रशंसन्ति वेदाःसर्वेऽपि नारद ! ॥ ४२ ॥
नेति केचित्तत्र पुनः कथन्ते यदि नोगृही
अतो धात्रा च शास्त्रेषु सुतलाभःप्रशंसितः ॥ ४३ ॥
पुनश्च सृष्टिवृद्ध्यर्थं नरकत्राणनाय च ।
तत्र स्त्रीणां समुत्पत्तिं विना सृष्टिर्न जायते ॥ ४४ ॥
सा चजातिप्रकृत्यैवकृपणादैन्यभागिनी । तासामुपरिमाऽवज्ञाभवेदितिचवेधसा
शास्त्रेषूक्तमसन्दिग्धं वाक्यमेतन्महत्फलम् ॥ ४६ ॥
दशपुत्रसमा कन्या दशपुत्रान्प्रवर्द्धयन् । यत्फलं लभते मर्त्यस्तल्लभ्यं कन्ययैकया
तस्मात्कन्या पितुः शोच्या सदा दुःखविवर्धिनी ॥ ४७ ॥

याऽपि स्यात्पूर्णसर्वार्था पतिपुत्रधनान्विता ।
त्वयोक्तं च कृते ह्यस्यास्तद्वाक्यं मम शोकदम् ॥ ४८ ॥
केनदोषेणमेपुत्रीनयोग्माआशिषामता नजातोऽस्याःपतिःकस्माद्वर्ततेवाकुलक्षणः
निर्धनश्च मुने कस्मात्सर्वेषां सर्वदः कुतः । इति दुर्घटवाक्यं ते मनोमोहयतीव मे
इति तं पुत्रवात्सल्यात्सभार्यं शोकसम्प्लुतम् ।
अहमाश्वासयं वाग्भिः सत्याभिः पाण्डुनन्दन ! ॥ ५१ ॥
माशुचःशैलराज त्वंहर्षस्थानेऽतिपुण्यभाक् । शृणुतद्वचनंमह्यंयन्मयोक्तंचह्यर्थवत्
जगन्माता त्वियं बाला पुत्री ते सर्वसिद्धिदा ।
पुराभवेऽभवद्भार्या सतीनाम्नाभवस्य या ॥ ५३ ॥
तदस्याःकिमहं दद्मि रवेर्दीपमिवाऽल्पकः ।
सञ्चिन्त्येति महादेव्यानाऽऽशिषंदत्तवानहम् ॥ ५४ ॥
न जातोऽस्याःपतिश्चेतिवर्ततेचभवोहिसः । नसजातोमहादेवोभूतभव्यभवोद्भवः
शरण्यः शाश्वतः शास्ता शङ्करः परमेश्वरः ॥ ५६ ॥
सर्वे देवा यत्पदमामनन्ति वेदैश्च सर्वैरपि यो न लभ्यः ।
ब्रह्मादिविश्वं ननु यस्य शैल ! बालस्य वा क्रीडनकं वदन्ति ॥ ५७ ॥
स चामङ्गल्यशीलोऽपि मङ्गलायतनोहरः । निर्धनःसर्वदश्चाऽसौवेदस्वंस्वयमेवसः
स च देवोऽचलःस्थाणुर्महादेवोऽजरोहरः ।
भविष्यतिपतिःसोऽस्यास्तत्किमर्थं तु शोचसि ॥ ५९ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेशमाहात्म्ये हिमवदाश्वासनं नाम त्रयोविंशोऽध्यायः ॥

---

# चतुर्विंशोऽध्यायः

## कुमारेशमाहात्म्ये शिवद्वारा कामदहनवर्णनम्

### नारद उवाच

एवं श्रुत्वा सभार्यः स प्रमोदप्लुतमानसः । प्रणम्यमामितिप्राहयद्येवंपुण्यवानहम्
पुनः किञ्चित्प्रवक्ष्यामि पुत्र्या मे दक्षिणःकरः ।
उत्तानःकारणंकितच्छ्रोतुमिच्छामि नारद ! ॥ २ ॥
इतिपृष्टोऽस्मि शैलेन प्रोवाचं कारणं तदा ।
सर्वदैव करो ह्यस्याःसर्वेषांप्राणिनांप्रति ॥ ३ ॥
अभयस्य प्रदाताऽसावुत्तानस्तु करस्ततः ।
एषा भार्या जगद्भर्तुर्वृषाङ्कस्य महीधर ! ॥ ४ ॥
जननी सर्वलोकस्य भाविनी भूतभाविनी ।
तद्यथाशीघ्रमेवैषा योगं यातु पिनाकिना ॥ ५ ॥
त्वया विधेयं विधिवत्तथा शैलेन्द्रसत्तम ! ।
अस्त्यत्र सुमहत्कार्यं देवानां हिमभूधर ! ॥ ६ ॥
इति प्रोच्य तमापृच्छ्य प्रावोचं वासवाय तत् ।
मम भूयस्तु कर्तव्यं तन्मयाकृतमेवहि ॥ ७ ॥
किं तु पञ्चशरः प्रेर्यः कार्यशेषेऽत्र वासव ।
इत्यादिश्य गतश्चाऽहं तारकं प्रतिफाल्गुन ॥ ८ ॥
कलिप्रियत्वात्तस्यैनमर्थं कथयितुं स्फुटम् ।
हिमाद्रिरपि मे वाक्यप्रेरितः पार्वतीम्प्रति ॥ ९ ॥
भवस्याऽऽराधनांकर्तुं ससखीमादिशत्तदा ।
सा तं परिचचारेशं तस्या दृष्ट्वासुशीलताम् ॥ १० ॥
पुष्पतोयफलाद्यानि नियुक्ता पार्वतीव्यधात् ।

महेन्द्रोऽपि च मद्वाक्यात्स्मरं सस्मार भारत ॥ ११ ॥
स च तत्स्मरणं ज्ञात्वा वसन्तरतिसंयुतः ।
चूताङ्कुरास्त्रः सहसा प्रादुरासीन्मनोभवः ॥ १२ ॥
तमाह च वचो धीमान्स्मयन्निव च तं स्पृशन् ।
उपदेशेन बहुना किं त्वां प्रति रतिप्रिय ! ॥ १३ ॥
चित्ते वससि तेन त्वं वेत्सि भूतमनोगतम् ।
तथापि त्वां वदिष्यामि स्वकार्यपरतांस्मरन् ॥ १४ ॥
ममैकं सुमहत्कार्यं कर्तुमर्हसि मन्मथ ! ।
महेश्वरं कृपानाथं सतीभार्यावियोजितम् ॥ १५ ॥
संयोजय पुनर्देव्या हिमाद्रिगृहजातया । देवी देवश्च तुष्टौ ते करिष्यत इहेप्सितम्

मदन उवाच

अलीकमेतद्देवेन्द्रस हिदेवस्तपोरतिः । नान्यासादयितव्यानि तेजांसिमनुरब्रवीत्
वेदान्तेषु च मां विप्रा गर्हयन्ति पुनःपुनः ।
महाशनो महापाप्मा कामोऽयमनलोमहान् ॥ १८ ॥
आवृतं ज्ञानमेतेन ज्ञानिनां नित्यवैरिणा ।
तस्मादयं सदा त्याज्यः कामोऽहिरिव सत्तमैः ॥ १६ ॥
एवं शीलस्य मे कस्मात्प्रतुष्यतिमहेश्वरः। मद्यपस्यैव पापस्य वासुदेवोजगद्गुरुः

इन्द्र उवाच

मैवंब्रूहि महाभाग ! त्वां विना कः पुमान्भुवि ।
धर्ममर्थंतथाकामं मोक्षम्वा प्राप्तमीश्वरः ॥ २१ ॥
यत्किञ्चित्साध्यते लोके मूलं तस्य च कामना ।
कथं कामं विनिन्दन्ति तस्मात्ते मोक्षसाधकाः ॥ २२ ॥
सत्यं चाऽपि श्रुतेर्वाक्यं तव रूपं त्रिधागतम् ।
तामसं राजसं चैव सात्त्विकं चापि मन्मथ ! ॥ २३ ॥



अमुक्तितः कामनया रूपं तत्तामसं तव ।
तत्ते रूपत्रयमिदं ब्रूहि नोपासते हि के ॥ २१ ॥
त्वंसाक्षात्परमःपूज्यःकुरुकार्यमिदंहिनःअथवापीडितान्दृष्ट्वासामान्यानपिपण्डिता
स्वप्राणैरपि त्रायन्ति परमेतन्महाफलम् ॥ २६ ॥
इति सञ्चिन्त्य कार्यं त्वं सर्वथा कुरु तत्स्फुटम् ॥ २७ ॥
इत्याकर्ण्य तथेत्युक्त्वावसन्तरतिसंयुतःपिकादिसैन्यसम्पन्नोहिमाद्रिंप्रययौस्मरः
तत्राऽपश्यत शम्भोः सपुण्यमाश्रममण्डलम् ।
नानावृक्षसमाकीर्णं शान्तसत्त्वसमाकुलम् ॥ २६ ॥
तत्राऽपश्यत्त्रिनेत्रस्य वीरकंनाम द्वारपम् ।
यथासाक्षान्महेशानंगणांश्चायुतशोऽस्यच ॥ ३० ॥
ददर्श च महेशानंनासाग्रकृतलोचनम् । देवदारुद्रुमच्छायावेदिकामध्यमाश्रितम् ॥
समकायं सुखासीनं समाधिस्थं महेश्वरम् ॥ ३१ ॥
निस्तरङ्गविनिगृह्य स्थितमिन्द्रियगोचरान् ।
आत्मानमात्मनादेवप्रविष्टंतपसोनिधिम् ॥ ३२ ॥
तं तथाविधमालोक्य सोऽन्तर्भेदाय यत्नवान् ।
भ्रमरध्वनिव्याजेन विवेश मदनो मनः ॥ ३३ ॥
एतस्मिन्नन्तरे देवो विकासितविलोचनः ।
सस्मार नगराजस्य तनयां रक्तमानसः ॥ ३४ ॥
निवेदिता वीरकेण विवेश च गिरेः सुता ।
तस्मिन्काले महाभागा सदा यद्वदुपैति सा ॥ ३५ ॥
ततस्तस्यां मनः स्वीयमनुरक्तमवेक्ष्य च । निगृह्य लीलया देवः स्वकं पृष्ठमवैक्षतः
तावदापूर्णधनुषमपश्यत रतिप्रियम् ॥ ३६ ॥
तन्नाशकृपया देवो नानास्थानेषु सोऽगमत् ।
तावत्पश्यति पृष्ठस्थमाकृष्य धनुषःशरम् ॥ ३७ ॥

स नदीः पर्वतांश्चैव आश्रमान्सरसीस्तथा ।
परिभ्रमन्महादेवः पृष्ठस्थं तमवैक्षत ॥ ३८ ॥
जगत्त्रयं परिभ्रम्य पुनरागात्स्वमाश्रमम् ।
पृष्ठस्थमेव तं वीक्ष्य निःश्वासं मुमुचे हरः ॥ ३६ ॥
ततस्तृतीयनेत्रोत्थवह्निना नाकवासिनाम् ।
क्रोशतांगमितःकामोभस्मत्वंपाण्डुनन्दन ॥ ४० ॥
स तु तं भस्मसात्कृत्वा हरनेत्रोद्भवोऽनलः ।
व्यजृम्भतजगद्दग्धुं ज्वालापूरितदिङ्मुखः ॥ ४१ ॥
ततो भवो जगद्धेतोर्व्यभजज्जातवेदसम् । साहङ्कारे जने चन्द्रे सुमनस्सु च गीतके
भृङ्गेषु कोकिलास्येषु विहारेषु स्मरानलम् ।
तत्प्राप्तौ स्नेहसंयुक्तं कामिनां हृदयं किल ॥ ४३ ॥
ज्वालयत्यनिशं सोऽग्निर्दुश्चिकित्स्योऽसुखावहः ॥
विलोक्य हरनिःश्वासज्वालाभस्मीकृतं स्मरम् ॥ ४४ ॥
विललाप रतिर्दीना मधुनाबन्धुनासह । विलपन्तीसुबहुशोमधुनापरिसान्त्विता
रत्याः प्रलापमाकर्ण्य देवदेवो वृषध्वजः ।
कृपया परया प्राह कामपत्नीं निरीक्ष्य च ॥ ४६ ॥
अमूर्तोऽपि ह्ययं भद्रे! कार्यंसर्वंपतिस्तव । रतिकालेध्रुवं बाले करिष्यतिनसंशयः
यदा विष्णुश्च भविता वासुदेवात्मजो विभुः ।
तदा तस्य सुतो यः स्यात्स पतिस्ते भविष्यति ॥ ४८ ॥
साप्रणम्यततोरुद्रमितिप्रोक्तारतिस्ततःजगामस्वेच्छयागत्यावसन्तादिभिरन्विता
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे
कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये कामदहनोनाम चतुर्विंशोऽध्यायः ॥ २४॥

---

## पञ्चविंशोऽध्यायः

नारदार्जुनसम्वादे महादेवतपःकरणं पार्वत्याऽपिस्वेष्टसाधनायहिमाद्रे-
रधित्यकायांतपस्याकृतातत्रमुनीनांतपःकरणायविरोधः पश्चाच्छङ्करद्वारा
ब्रह्मचारिछद्मवेषेणपर्वतपुत्र्याःपरीक्षाशिवपार्वत्युद्वाहकविषयकउत्साहः

अर्जुन उवाच

देवर्षे ! वर्ण्यते चेयं कथा पीयूससोदरा । पुनरेतन्मुने ! ब्रूहि यदा वेत्ति महेश्वरः
भगवान्स्वांसतींभार्यां वधार्थंचापितारकम् ।
सत्याश्चविरहात्तप्यन्ददाहकिमसौस्मरम् ॥ २ ॥
त्वयैवोक्तं सविरहात्सत्यास्तप्यति वैतपः ।
हिमाद्रिमास्थितोदेवस्तस्याःसङ्गमवाञ्छया ॥ ३ ॥

नारद उवाच

सत्यमेतत्पुरा पार्थ भवस्येदं मनीषितम् । अतप्ततपसायोगो न कर्तव्योमयाऽनया
तपो विना शुद्धदेहो न कथञ्चन जायते ।
अशुद्धदेहेन समं संयोगो नैव दैहिकः ॥ ५ ॥
महत्कर्माणि यानीह तेषां मूलं सदा तपः ।
नातप्ततपसां सिद्धिर्महत्कर्माणि यान्ति वै ॥ ६ ॥
एतस्मात्कारणाद्देवो दर्पितं तं ददाह तु ।
ततोदग्धे स्मरे चाऽपि पार्वतीमपि व्रीडिताम् ॥ ७ ॥
विहाय सगणो देवः कैलासं समपद्यत । देवी च परमोद्विग्ना प्रस्खलन्ती पदेपदे
जीवितं स्वं विनिन्दन्ती बभ्रामेतस्ततश्च सा ।

हिमाद्रिरपि स्वे शृङ्गे रुदन्तीं पृष्टवान्रतिम् ॥ ९ ॥
काऽसि कस्याऽसि कल्याणि किमर्थं चापि रोदिषि ।
पृष्टा सा च रतिःसर्वंयथावृत्तं न्यवेदयत् ! ॥ १० ॥
निवेदिते तथा रत्याशैलःसम्भ्रान्तमानसः ।
प्राप्यस्वांतनयांपाणावादायागात्स्वकंपुरम् ॥ ११ ॥
सा तत्र पितरौ प्राह सखीनां वदनेन च ।
दुर्भगेन शरीरेण किमनेन हि कारणम् ॥ १२ ॥
देहवासंपरित्यक्ष्ये प्राप्स्येवाभिमतंपतिम् ।
असाध्यं चाप्यभीष्टं च कथंप्राप्यंतपोविना ॥ १३ ॥
नियमैर्विविधैस्तस्माच्छोषयिष्येकलेवरम् ।
अनुजानीत मां तत्र यदि वः करुणामयि ॥ १४ ॥
श्रुत्वेनि वचनं मातापिता च प्राहतांशुभाम् ।
उमेतिचपले पुत्रि ! न क्षमं तावकं वपुः ॥ १५ ॥
सोढुंक्लेशात्मरूपस्यतपसःसौम्यदर्शने । भावीन्यप्यनिवार्याणिवस्तूनिचसदैवतु
भाविनोऽर्था भवन्त्येव नरस्याऽनिच्छतोऽपि हि ।
तस्मान्न तपसा तेऽस्ति बाले ! किञ्चित्प्रयोजनम् ॥ १७ ॥

श्रीदेव्युवाच

यदिदं भवतोवाक्यंनसम्यगिति मे मतिः । केवलं न हि दैवेनप्राप्तुमर्थोहिशक्यते
किञ्चिद्दैवाद्धठात्किञ्चित्किञ्चिदेव स्वभावतः ।
पुरुषःफलमाप्नोति चतुर्थंनाऽत्रकारणम् ॥ १९ ॥
ब्रह्मणा चाऽपि ब्रह्मत्वं प्राप्तं किल तपोबलात् ।
अन्यैरपि च यल्लब्धं तन्न संख्यातुमुत्सहे ॥ २० ॥
अध्रुवेणशरीरेणयद्यभीष्टंन साध्यते । पश्चात्स शोच्यतेमन्दःपतितेऽस्मिञ्छरीरके
यस्य देहस्य धर्मोऽयं कचिज्जायेत्कचिन्म्रियेत् ।



कचिद्गर्भगतंनश्येज्जातमात्रं कचित्तथा ॥ २२ ॥
बाल्ये च यौवनेचाऽपि वार्धक्येऽपि विनश्यति ।
तेन चञ्चलदेहेनकोऽर्थःस्वार्थोनचेद्भवेत् ॥ २३ ॥
इत्युक्त्वा स्वसखीयुक्ता पितृभ्यां साश्रुवीक्षिता ।
शृङ्गंहिमवतःपुण्यंनानाश्चर्यं जगाम सा ॥ २४ ॥
तत्राम्बराणि सन्त्यज्यभूषणानिचशैलजा ।
सम्वीतावल्कलैर्दिव्यैस्तपोऽतप्यतसंयता ॥ २५ ॥
ईश्वरं हृदि संस्थाप्य प्रणवाभ्यसनादृता ।
मुनीनामप्यभून्मान्या तदानीं पार्थ पार्वती ॥ २६ ॥
त्रिस्नाता पाटलापत्रभक्षकाऽभूच्छतं समाः ।
शतं च बिल्वपत्रेण शीर्णेन कृतभोजना ॥ २७ ॥
जलभक्षाशतं चाभूच्छतं वै वायुभोजना ।
ततो नियममादाय पादाङ्गुष्ठस्थिताऽभवत् ॥ २८ ॥
निराहारा ततस्तापं प्रापुस्तत्तपसो जनाः ।
ततो जगत्समालोक्य तदीयतपसोर्जितम् ॥ २९ ॥
हरस्तत्राऽऽययौसाक्षाद्ब्रह्मचारिवपुर्द्धरः ।
वसानोवल्कलं दिव्यं रौरवाजिनसम्वृतः ॥ ३० ॥
सुलक्षणाषाढधरः सद्वृत्तः प्रतिभानवान् ।
ततस्तं पूजयामासुस्तत्सख्यो बहुमानतः ॥ ३१ ॥
वक्तुमिच्छुः शैलपुत्रीं सखीभिरितिचोदितःब्रह्मन्नियंमहाभागागृहीतनियमा शुभा
मुहूर्तपञ्चमात्रेण नियमोऽस्याः समाप्यते ।
तत्प्रतीक्षस्व तं कालं पश्चादस्मत्सखीसमम् ॥ ३३ ॥
नानाविधाधर्मवार्ताःप्रकरिष्यसिब्राह्मण!इत्युक्त्वाविजयाद्यास्तादेवीचरितवर्णनै
अश्रुमुख्योद्विजस्याऽग्रे निन्युः कालंचतंतदा ।

ततः काले किञ्चिदूने ब्रह्मचारीमहामतिः ॥ ३५ ॥
विलोकनमिषेणाऽगादाश्रमोपस्थितं ह्रदम् ।
निपपात च तत्राऽसौ चुक्रोशाऽतितरांततः ॥ ३६ ॥
अहमत्र निमज्जामि कोऽपि मामुद्धरेत भोः ।
इति तारेण क्रोशन्तंश्रुत्वा तंविजयादिकाः ॥ ३७ ॥
आजग्मुस्त्वरया युक्ता ददुस्तस्मै करं च ताः ।
स चुक्रोश ततो गाढं दूरेदूरे पुनःपुनः ॥ ३८ ॥
नाहं स्पृशाम्यसंसिद्धां म्रियेवा नानृतंत्विदम् ।
ततःसमाप्तनियमापार्वतीस्वयमाययौ ॥ ३९ ॥
सव्यं करं ददावस्य तंचाऽसौ नाभ्यनन्दत ।
भद्रे यच्छुचिनैवस्याचचैवाऽवज्ञयाकृतम् ॥ ४० ॥
सदोषेणकृतंयच्चतदादद्यान्नकर्हिचित्सव्यं चाऽशुचिते हस्तंनावलम्बामिकर्हिचित्
इत्युक्ता पार्वती प्राह नाहं दत्तं च दक्षिणम् ।
ददामि कस्यचिद्विप्र ! देवदेवाय कल्पितम् ॥ ४२ ॥
दक्षिणं मे करं देवो ग्रहीता भव एव च । शीर्यते चोग्रतपसा सत्यमेतन्मयोदितम्

विप्र उवाच

यद्येवमवलेपस्ते गमनं केन वार्यते । यथा तव प्रतिज्ञेयं समाऽपीयं तथाऽचला ॥
रुद्रस्यापि वयं मान्याः कीदृशं ते तपो वद ।
विषमस्थं यत्र विप्रं म्रियमाणमुपेक्षसि ॥ ४५ ॥
अवजानासिविप्रांस्त्वंतच्छीघ्रं व्रज दर्शनात् ।
यदिवामन्यसेपूज्यांस्ततोऽभ्युद्धरनान्यथा ॥ ४६ ॥
ततो विचार्य बहुधा इतिचेतिचसाशुभा ।
विप्रस्योद्धरणं सर्वधर्मेभ्योऽमन्यताऽधिकम् ॥ ४७ ॥
ततः सा दक्षिणं दत्त्वा करं तं प्रोज्जहार च ।



नरं नारी प्रोद्धरति मज्जन्तं भववारिधौ ॥
एतत्सन्दर्शनार्थाय तथा चक्रे भवोद्भवः ॥ ४८ ॥
प्रोद्धृत्य च ततः स्नात्वा बद्ध्वा योगासनं स्थिता ॥ ४९ ॥
ब्रह्मचारीततःप्राहप्रहसन्किमिदं शुभे ! कर्तुकामाऽसितन्वङ्गिदृढयोगासनस्थिता
देवी प्राह ज्वालयिष्ये शरीरं योगवह्निना ।
महादेवकृतमतिरुच्छिष्टाऽहं यतोऽवभवम् ॥ ५१ ॥
ब्रह्मचारी ततः प्राह काञ्चिद्ब्राह्मणकाम्यया ।
कृत्वा वार्तास्ततःस्वीयमभीष्टं कुरुपार्वति ! ॥ ५२ ॥
नोपहन्या कदाचिद्धि साधुभिर्विप्र कामना ।
धर्ममेनं मन्यसे चेन्मुहूर्त्तं ब्रूहि पार्वति ॥ ५३ ॥
देवी प्राह ब्रूहि विप्र ! मुहूर्तंसंस्थिता त्वहम् ।
ततःस्वयं व्रती प्राहदेवीतांस्वसखीयुताम् ॥ ५४ ॥
किमर्थमिति रम्भोरु नवे वयसिदुश्चरम् ।
तपस्त्वया समारब्धं नाऽनुरूपं विभाति मे ॥ ५५ ॥
दुर्लभंप्राप्य मानुष्यं गिरिराजगृहेऽधुना ।
भोगांश्चदुर्लभान्देवित्यक्त्वाकिंक्लिश्यतेवपुः ॥ ५६ ॥
अतीव दूये वीक्ष्य त्वां सुकुमारतराकृतिम् ।
अत्युग्रतपसा क्लिष्टा पद्मिनीव हिमार्दिता ॥ ५७ ॥
इदं चान्यत्तव शुभे ! शिरसो रोगदं मम ।
यद्देहं त्यक्तुकामा त्वं प्रबुद्धा नासिबालिके ॥ ५८ ॥
वामः कामो मनुष्येषु सत्यमेतद्वचो यतः ।
स्पृहणीयाऽसि सर्वेषामेवं पीडयसे वपुः ॥ ५९ ॥
अविज्ञातान्वयो नग्नः शूलीभूतगणाधिपः श्मशाननिलयोभस्मोद्धूलनोवृषवाहनः
गजाजिनो द्विजिह्वाद्यलङ्कृताङ्गो जटाधरः ।

विरूपाक्षः कथङ्कारं निर्गुणः स्यात्तवोचितः ॥ ६१ ॥
गुणा ये कुलशीलाद्या वराणामुदिता बुधैः ।
तेषामेकोऽपि नैवास्ति तस्मिस्तन्नोचितःसते ॥ ६२ ॥
शोचनीयतमा पूर्वमासीत्पार्वति कौमुदी ।
त्वंसम्वृत्ताद्वितीयासितस्यास्तत्सङ्गमाशया ॥ ६३ ॥
तपोधनाः सर्वसमा वयं यद्यपि पार्वति !
दुनोत्येव तवारम्भः शूलायां यूपसत्क्रिया ॥ ६४ ॥
वृषभारोहणंवासःश्मशाने पाणिसङ्ग्रहः ।
सव्यालपाणिनाक्षौमगजत्वम्बन्धनःकथम् ॥ ६५ ॥
जनहास्यकरंसर्वंत्वयाऽऽरब्धमसाम्प्रतम् ।
स्त्रीभावाद्भूतिसम्पर्क्कःकथंचाभिमतस्तव ॥ ६६ ॥
निवर्तय मनस्तस्मादस्मात्सर्वविरोधिनः ।
मृगाक्षि मदनारातेर्मर्कटाक्षस्य प्रार्थनात् ॥ ६७ ॥

विरुद्धवादिनं चैवं ब्रह्मचारिणमीश्वरम् । निशम्यकुपितादेवीप्राहवाचा सगद्गदम्

मा मा ब्राह्मण ! भाषिष्ठा विरुद्धमिति शङ्करे ।
महत्तमो याति पुमान्देवदेवस्य निन्दया ॥ ६६ ॥

नसम्यगभिजानासितस्यदेवस्यचेष्टितम्श्रृणुब्राह्मणत्वंपापाद्यथास्मात्परिमुच्यसे

स आदिः सर्वजगतां कोऽस्य वेदान्वयंततः ।
सर्वं जगद्यस्यरूपंदिग्वासाःकीर्त्यतेततः ॥ ७१ ॥
गुणत्रयमयं शूलं शूली यस्माद्बिभातसः ।
अबद्धाः सर्वतो मुक्ता भूता एवचतत्पतः ॥ ७२ ॥
श्मशानंचापिसंसारस्तद्वासीकृपयार्थिनाम् ।
भूतयःकथिताभूतिस्तांबिभर्तिसभूतिभृत् ॥ ७३ ॥
वृषो धर्म इति प्रोक्तस्तमारूढस्ततोवृषी ।



सर्पाश्चदोषाःक्रोधाद्यास्तान्बिभर्तिजगन्मयः ॥ ७४ ॥
नानाविधाःकर्मयोगा जटारूपा बिभर्ति सः ।
वेदत्रयी त्रिनेत्राणि त्रिपुरं त्रिगुणंवपुः ॥ ७५ ॥
भस्मीकरोति तद्देवस्त्रिपुरघ्नस्ततः स्मृतः ।
एवम्विधं महादेवं विदुर्ये सूक्ष्मदर्शिनः ॥ ७६ ॥

कथङ्कारं हि ते नाम भजन्ते नैव तं हरम् । अथवाभीतसंसाराःसर्वेविप्रयतोजनाः विमृश्य कुर्वते सर्वं विमृश्यैतन्मयाकृतम् । शुभंवाऽप्यशुभंवाऽस्तुत्वमप्येनंप्रपूजय

इति ब्रुवन्त्यां तस्यां तु किञ्चित्प्रस्फुरिताधरम् ।
विज्ञाय तां सखीमाह किमप्येष विवक्षुकः ॥ ७६ ॥

वार्यातामितिविप्रोऽयं महद्दूषणभाषकः न केवलंपापभागीश्रोतावै स्यान्नसंशयः

अथवा किञ्चनःकार्यंवादेनसहब्राह्मणैः ।
कर्णौ पिधाय यास्यामो यथायःस्यात्तथाऽस्तुसः ॥ ८१ ॥
इत्युक्त्वोत्थाय गच्छन्त्यां पिधाय श्रवणावुभौ ।
स्वरूपं समुपाश्रित्य जगृहेवसनंहरः ॥ ८२ ॥
ततो निरीक्ष्य तं देवं सम्भ्रान्ता परमेश्वरी ।
प्रणिपत्य महेशानं तुष्टावाऽवनता उमा ॥ ८३ ॥
प्राह तां च महादेवो दासोऽस्मि तव शोभने ! ।
तपोद्रव्येणक्रीतश्च समादिशयथेप्सितम् ॥ ८४ ॥

देव्युवाच

मनसस्त्वं प्रभुः शम्भो ! दत्तं तच्च मया तव ।
वपुषः पितरावीशौ तौसम्मानयितुमर्हसि ॥ ८५ ॥

महादेव उवाच

पित्राहिते परिज्ञातं दृष्ट्वात्वांरूपशालिनीम् ।
बालां स्वयम्वरंपुत्रीमहंदास्यामि नान्यथा ॥ ८६ ॥

तत्तस्य सर्वमेवाऽस्तु वचनं त्वं हिमाचलम् ।

स्वयम्वरार्थं सुश्रोणि ! प्रेरय त्वां वृणेततः ॥ ८७ ॥

इत्युक्त्वा तां महादेवःशुचिःशुचिषदोविभुः । जगामेष्टंतदादेशंस्वपुरंप्रययौचसा

दृष्ट्वा देवीं तदा हृष्टो मेनया सहितोऽचलः ॥ ८६ ॥

आलिङ्ग्याऽऽघ्रायपप्रच्छसर्वंसाचन्यवेदयत्। दुहितुर्देवदेवेननआज्ञतंतु हिमाचलः

स्वयम्वरं प्रमुदितः सर्वलोकेष्वघोषयत् । अश्विनौद्वादशादित्यागन्धर्वगरुडोरगाः

यक्षाः सिद्धास्तथा साध्या दैत्याः किम्पुरुषा नगाः ।

समुद्राद्याश्च ये केचित्त्रैलोक्यप्रवराश्च ये ॥ ६२ ॥

त्रतस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च त्रयस्त्रिंशच्च ये देवास्त्रयस्त्रिंशच्चकोटयः

जग्मुर्गिरीन्द्रपुत्र्यास्तु स्वयम्वरमनुत्तमम् ।

आमन्त्रितस्तथा विष्णुर्मेरुमाह हसन्निव ॥ ६४ ॥

तातास्माकंच सा देवी मेरो गच्छ नमामिताम् ।

अथशैलसुतादेवीहैममारुह्यशोभनम् ॥ ६५ ॥

विमानं सर्वतोभद्रं सर्वरत्नैरलङ्कृतम् ।

अप्सरोभिः प्रनृत्यद्भिः सर्वाभरणभूषिता ॥ ६६ ॥

गन्धर्वसंघैर्विविधैःकिन्नरैश्चसुशोभनैः ।

वन्दिभिःस्तूयमाना च वीरकांस्यधरास्थिता ॥ ६७॥

सितातपत्ररत्नांशुमिश्रितं चाऽवहत्तदा ।

शालिनीनामपार्वत्याः संध्यापूर्णेन्दुमण्डला ॥ ६८ ॥

चामरासक्तहस्ताभिर्दिव्यस्त्रीभिश्चसम्वृता ।

मालां प्रगृह्य सा तस्थौसुरद्रुमसमुद्भवाम् ॥ ६६ ॥

एवं तस्यां स्थितायां तु स्थितेलोकत्रयेतदा ।

शिशुर्भूत्वामहादेवःक्रीडार्थंवृषभध्वजः ॥ १०० ॥

उत्सङ्गतलसंगुप्तो वभूव भगवान्भवः जयेति यत्पदं ख्यातं तस्य सत्यार्थमीश्वरम्



अथ दृष्ट्वा शिशुं देवास्तस्य उत्सङ्गवर्त्तिनः ।

कोऽयमत्रेति सम्मन्त्र्य चुक्रुशुर्भृशरोषिताः ॥ १०२ ॥

वज्रमाहारयत्तस्य बाहुमुद्यम्य वृत्रहा । स बाहुरुद्यतस्तस्य तथैव समतिष्ठत ॥

स्तम्भितः शिशुरूपेण देवदेवेन लीलया ।

वज्रं क्षेप्तुं न शक्नोति बाहुं चालयितुं तदा ॥ १०४ ॥

वह्निःशक्तिं तदाक्षेप्तुं न शशाक तथोत्थितः ।

यमोऽपि दण्डं खड्गंचनिर्ऋतिस्तंशिशुंप्रति ॥ १०५ ॥

पाशं च वरुणो राजा ध्वजयष्टिं समीरणः ।

सोमो गुडं ( इषुं सोमो ) धनेशश्चगदां सुमहतीं दृढाम् ॥ १०६ ॥

नानायुधानि चादित्या मुसलंवसवस्तथा ।

महाघोराणि शस्त्राणि तारकाद्याश्च दानवाः ॥ १०७ ॥

स्तम्भिता देवदेवेन तथाऽन्ये भुवनेषु ये ।

पूषा दन्तान्दशन्दन्तैर्बालमैक्षत मोहितः ॥ १०८ ॥

तस्याऽपिदशनाः पेतुर्दृष्टमात्रस्य शम्भुना ।

भगश्चनेत्रे विकृते चकार स्फुटिते च ते ॥ १०६ ॥

बलं तेजश्च योगांश्च सर्वेषां, जगृहे प्रभुः ।

अथ तेषु स्थितेष्वेव मन्युमत्सु सुरेष्वपि ॥ ११० ॥

ब्रह्माध्यानमुपाश्रित्यबुबोध हरचेष्टितम्। सोऽभिगम्य महादेवंतुष्टाव प्रयतोविधिः

पौराणैः सामसङ्गीतैर्वैदिकैर्गुह्यनामभिः ।

नमस्तुभ्यं महादेव महादेव्यै नमोनमः ॥ ११२ ॥

प्रसादात्तव बुद्ध्यादिर्जगदेतत्प्रवर्तते । मूढाश्च देवताः सर्वा नैनं बुध्यत शङ्करम्

महादेवमिहायातं सर्वदेवनमस्कृतम् ।

गच्छध्वं शरणं शीघ्रं यदि जीवतुमिच्छथ ॥ ११४ ॥

ततः सम्भ्रमसम्पन्नास्तुष्टुवुःप्रणताः सुराः ।

नमोनमोमहादेव पाहिपाहि जगत्पते ! ॥ ११५ ॥
दुराचारान्भवानस्मानात्मद्रोहपरायणान् ।
अहोपश्यतनोमौढ्यंजानन्तस्तवभाविनीम् ॥ ११६ ॥
भार्यामुमां महादेवीं तथाऽप्यत्र समागताः ।
युक्तमेतद्यदस्माकं राज्यं गृह्येत चासुरैः ॥ ११७ ॥
येषामेवंविधाबुद्धिरस्माभिः किंकृतं त्विदम् ।
अथवानोनदोषोऽस्तिपशवोहिवयंयतः ॥ ११८ ॥
त्वयैव पतिना सर्वे प्रेरिताः कुर्महे विभो ।
ईश्वरः सर्वभूतानां पतिस्त्वं परमेश्वरः ॥ ११९ ॥
भ्रामयस्यखिलंविश्वंयन्त्रारूढंस्वमायया ।
येनविभ्रामितामूढाःसमायाताः स्वयम्वरम् ॥ १२० ॥
तस्मै पशूनां पतये नमस्तुभ्यं प्रसीद नः ।
अथ तेषां प्रसन्नोऽभूद्देवदेवस्त्रियम्बकः ॥ १२१ ॥
यथापूर्वंचकारैतान्संस्तवाद्ब्रह्मणःप्रभुः । तारकप्रमुखादैत्याःसंक्रुद्धास्तत्रप्रोचिरे
कोऽयमङ्ग महादेवो न मन्यामो वयं च तम् ।
ततः प्रहस्य बालोऽसौ हुङ्कारं लीलया व्यधात् ॥ १२३ ॥
हुङ्कारेणैव ते दैत्याः स्वमेव नगरंगताः । विस्मृतंसकलंतेषांस्वयम्वरमुखं च तत्
महादेवप्रभावेण दैत्यानां घोरकर्मणाम् ।
एवं यस्य प्रभावो हि देवदैत्येषु फाल्गुन ! ॥ १२५ ॥
कथमीश्वरवाक्यार्थस्तस्मादन्यत्र मुच्यते ।
असंशयं विमूढास्ते पश्चात्तापः पुरा महान् ॥ १२६ ॥
ईश्वरं भुवनस्याऽस्य ये भजन्ते न त्र्यम्बकम् ।
ततःसंस्तूयमानःस सुरैःपद्मभुवादिभिः ॥ १२७ ॥
वपुश्चकार देवेशस्त्र्यम्बकःपरमाद्भुतम् ।



तेजसा तस्य देवास्ते सेन्द्रचन्द्रदिवाकराः ॥ १२८ ॥
सब्रह्मकाः ससाध्याश्च वसुर्विश्वेच देवताः ।
सयमाश्च सरुद्राश्चचक्षुरप्रार्थयन्प्रभुम् ॥ १२९ ॥
तेभ्यः परतमं चक्षुः स्ववपुर्द्रष्टुमुत्तमम् ।
ददावम्बापतिः शर्वो भवान्याश्चाऽचलस्यच ॥ १३० ॥
लब्ध्वा रुद्रप्रसादेन दिव्यं चक्षुरनुत्तमम् ।
सब्रह्मकास्तदा देवास्तमपश्यन्महेश्वरम् ॥ १३१ ॥
ततो जगुश्च मुनयः पुष्पवृष्टिं च खेचराः । मुमुचुश्च तदा नेदुर्देवदुन्दुभयो भृशम् ॥
जगुर्गन्धर्वमुख्याश्च ननृतुश्चाऽप्सरोगणाः ।
मुमुदुर्गणपाः सर्वे मुमोदाऽम्बा च पार्वती ॥ १३३ ॥
ब्रह्माद्यामेनिरेपूर्णांभवानींचनिरीश्वरम् । तस्यदेवीततोहृष्टासमक्षंत्रिदिवौकसाम्
पादयोः स्थापयामास मालां दिव्यां सुगन्धिनीम् ।
साधुसाध्विति सम्प्रोच्य तया तं तत्र चर्चितम् ॥ १३५ ॥
सह देव्या नमश्चक्रुः शिरोभिर्भूतलाश्रितैः सर्वे सब्रह्मका देवा जयेतिचमुदा जगुः
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये श्रीमहादेववैवाहिकोत्साहवर्णनं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## षड्विंशोऽध्यायः

**शिवपार्वत्युद्वाहेसमेषांकृतेनिमन्त्रणंतत्र विवाहमण्डपे कन्यादानसङ्कल्पावसरे शिवपूर्वजत्वकृतेप्रश्नोविष्णुनासमाधानेसानन्दंशिवगौरीविवाहः**

नारद उवाच

अथ ब्रह्मा महादेवमभिवाद्य कृताञ्जलिः । उद्वाहः क्रियतां देवइत्युवाच महेश्वरम्

तस्य तद्वचनं श्रुत्वा प्राहेदं भगवान्हरः ।
पराधीना वयं ब्रह्मन्हिमाद्रेस्तव चाऽपि यत् ॥
यद्युक्तं क्रियतां तद्धि वयं युष्मद्वशेऽधुना ।
ततो ब्रह्मा स्वयं पुरं रत्नमयं शुभम् ॥३॥
उद्वाहार्थं महेशस्य तत्क्षणात्समकल्पयत् ।
शतयोजनविस्तीर्णं प्रासादशतशोभितम् ॥ ४ ॥
पुरे तस्मिन्महादेवः स्वयमेव व्यतिष्ठत ।
ततः सप्तमुनीन्देवश्चिन्तिताभ्यागतान्पुरः ॥ ५ ॥
प्राहिणोदम्बिकायाश्च स्थिरपत्रार्थमीश्वरः ।
सारुन्धतीकास्ते तत्रहलादयन्तो हिमाचलम् ॥ ६ ॥
सभार्यमीश्वरगुणैः स्थिरपत्राणिचादधुः ।
ततःसम्पूजितास्तेनपुनरागम्यतेऽचलात् ॥ ७ ॥
न्यवेदयंस्त्र्यम्बकाय स च तानभ्यनन्दत ।
उद्वाहार्थं ततो देवो विश्वं सर्वं न्यमन्त्रयत् ॥ ८ ॥
समागतंचयत्सर्वंविनादैत्यैर्दुरात्मभिः । स्थावरं जङ्गमंयश्च विश्वंविष्णुपुरोगमम्
सग्रहाकं पुरारातेर्महिमानमवर्धयत् । ततस्तं विधिराहेदं गन्धमादनपर्वते ॥१० ॥
पुरे स्थितं विवाहस्य देव ! कालः प्रवर्तते ।
ततस्तस्य जटाजूटे चन्द्रखण्डं पितामहः ॥ ११ ॥
बबन्ध प्रणयोदारविस्फारितविलोचनः ।
कपर्द्द शोभनं विष्णुः स्वयंचक्रेऽस्य हर्षतः ॥ १२ ॥
कपालमालां विपुलां चामुण्डा मूर्ध्न्यबन्धत ।
उवाच चापि गिरिशंपुत्रं जनय शङ्कर ॥ १३ ॥
योदैत्येन्द्रकुलंहत्वा मां रक्तैस्तर्पयिष्यति ।
सूर्योज्वलच्छिखारक्तंभाभासितजगत्त्रयम् ॥ १४ ॥
बबन्ध देव देवस्यस्वयमेवप्रमोदतः शेषवासुकिमुख्याश्चज्वलन्तस्तेजसा शुभाः ॥



आत्मानं भूषणस्थाने स्वयं ते चक्रुरीश्वरे ।
वायवश्च ततस्तीक्ष्णशृङ्गं हिमगिरिप्रभम् ॥ १६ ॥
वृषं विभूषयामासुर्नानारत्नोपपत्तिभिः शक्रो गजाजिनंगृह्यस्वयमग्रे व्यवस्थितः
विना भस्म समाधाय कपाले रजतप्रभम् ॥ १६ ॥
मनुजास्थिमयीं मालां प्रेतनाथश्चचक्रम् ॥ १८ ॥
वह्निस्तेजोमयं दिव्यमजिनं प्रददौ स्थितः ।
एवं विभूषितःसर्वैर्भृत्यैरीशो बभौ भृशम् ॥ १६ ॥
ततो हिमाद्रेः पुरुषा वीरकं प्रोचिरे वचः ।
मा भूत्कालात्ययः शीघ्रं भवस्यैतन्निवेद्यताम् ॥ २० ॥
ततो देवं प्रणम्याऽऽह वीरकः करसम्पुटी ।
त्वरयन्ति महेशानं हिमाद्रेःपुरुषास्त्वमी ॥ २१ ॥
इति श्रुत्वा वचो देवः शीघ्रमित्येव चाऽब्रवीत् ।
सप्त वारिधयस्तस्य चक्रुर्दर्पणदर्शनम् ॥ २२ ॥
तत्रैक्षत महादेवः स्वरूपं स जगन्मयम् ।
ततो बद्धाञ्जलिर्धीमान्स्थाणुं प्रोवाच केशवः ॥ २३ ॥
देवदेवमहादेव त्रिपुरान्तक शङ्कर ! ।
शोभसेऽनेन रूपेण जगदानन्ददायिना ॥ २४ ॥
महेश्वर यथा साक्षादपरस्त्वं महेश्वरः ।
ततः स्मयन्महादेवो जयेति भुवने श्रुतः ॥ २५ ॥
करमालम्ब्य विष्णोश्चवृषभं रुरुहे शनैः ।
ततश्च वसवो देवाः शूलं तस्य न्यवेदयन् ॥ २६ ॥
धनदोनिधिभिर्युक्तःसमीपस्थस्ततोऽभवत्सशूलपाणिर्विश्वात्मासश्चचालततोदतः
देवदुन्दुभिनादैश्च पुष्पासारैश्च गीतकैः ।
नृत्यद्भिरप्सरोभिश्च जयेति च महास्वनः ॥२८ ॥

सव्यदक्षिणसंस्थानौ ब्रह्मविष्णू तु जग्मतुः ।
हंसं च गरुडं चैव समारुह्य महाप्रभौ ॥ २९ ॥
अथादितिर्दितिःसाचदनुःकद्रूःसुपर्णजा । पोलोमीसुरसाचैवसिंहिकासुरभिर्मुनिः
सिद्धिर्माया क्षमा दुर्गा देवी स्वाहा स्वधा सुधा ।
सावित्री चैव गायत्री लक्ष्मीः सा दक्षिणा द्युतिः ॥ ३१ ॥
स्पृहा मतिर्धृतिर्बुद्धिर्मन्थिऋद्धिःसरस्वती ।
राकाकुहूः सिनीवालीदेवीभानुमतीतया ॥ ३२ ॥
धरणीधारणी वेला राज्ञी चाऽपिचरोहिणी ।
इत्येताश्चान्यदेवानामातरःपत्नयस्तया ॥ ३३ ॥
उद्वाहं देवदेवस्य जग्मुःसर्वामुदान्विता । उरगागरुडायक्षा गन्धर्वाःकिन्नरानराः
सागरा गिरयो मेघा मासाः सम्वत्सरास्तथा ।
वेदा मन्त्रास्तथायज्ञाः श्रौता धर्माश्च सर्वशः ॥ ३५ ॥
हुङ्कारोः प्रणवाश्चैव इतिहासाःसहस्रशः । कोटिशश्चतदादेवाप्र्यन्तायाःसवाहन
अनुजग्मुर्महादेवं कोटिशोऽर्बुदशश्च हि ।
गणाश्च पृष्ठतो जग्मुः शङ्खवर्णाश्च कोटिशः ॥ ३७ ॥
दशभिःकेकराख्याश्चविद्युतोऽष्टाभिरेवच ।
चतुःषष्ट्याविशाखाश्च नवभिःपरियात्रिकाः ॥ ३८ ॥
षड्भिः सर्वान्तकः श्रीमांस्तथैव विकृताननः ।
ज्वालाकेशो द्वादशभिः कोटिभिः सम्वृतो ययौ ॥ ३९ ॥
सप्तभिः समदःश्रीमान्दुन्दुभोऽष्टाभिरेव च ।
पञ्चभिश्चकपालीशःषड्भिः संह्रदकःशुभः ॥ ४० ॥
खोटिकोटिभिरेवैकः कुण्डकः कुम्भकस्तथा ।
विष्टम्भोऽष्टाभिरेवेह गणपः सर्वसत्तमः ॥ ४१ ॥
पिप्पलश्च सहस्रेण सन्नादश्च तथा बली ।



आवेशनस्तथाऽष्टाभिः सप्तभिश्चन्द्रतापनः ॥ ४२ ॥
महाकेशः सहस्रेण नन्दिर्द्वादशभिस्तथा ।
नगः कालः करालश्च महाकालः शतेन च ॥ ४३ ॥
अग्निकःशतकोट्यावैकोट्याऽग्निमुख एव च ।
आदित्यमूर्धाकोट्याचकोट्याचैवधनावहः ॥ ४४ ॥
सन्नागश्च शतेनैव कुमुदः कोटिभिस्त्रिभिः ।
अमोघः कोकिलश्चैव कोटिकोट्या सुमन्त्रकः ॥ ४५ ॥
काकपादस्तथा षष्ट्या षष्ट्यासन्तानको गणःमहाबलश्चनवभिर्मधुपिङ्गश्च पिङ्गला
नीलो नवत्या सप्तत्या चतुर्वक्त्रश्च पूर्वपात् ।
वीरभद्रश्चतुःषष्ट्या करणो बालकस्तथा ॥ ४७ ॥
पञ्चाक्षः शतमन्युश्च मेघमन्युश्चविंशतिःकाष्ठकोटिश्चतुःषष्ट्यासुकोशोवृषभस्तथा
विश्वरूपस्तालकेतुः पञ्चाशच्चसिताननः ।
ईशानोवृद्धदेवश्चदीप्तात्मा मृत्युहा तथा ॥ ४९ ॥
विषादो यमहा चैव गणो भृङ्गिरिटिस्तथा ।
अशनी हासकश्चैवचतुःषष्ट्या सहस्रपात् ॥ ५० ॥
एते चाऽन्ये च गणपा असंख्यातामहाबलाः ।
सर्वे सहस्रहस्ताश्च जटामुकुटधारिणः ॥ ५१ ॥
चन्द्रलेखावतंसाश्च नीलकण्ठास्त्रिलोचनाः ।
हारकुण्डलकेयूरमुकुटाद्यैरलङ्कृताः ॥ ५२ ॥
अणिमादिगुणैर्युक्ताःशक्ताःशापप्रसादयोः ।
सूर्यकोटिप्रतीकाशास्तत्राऽऽजग्मुर्गणेश्वराः ॥ ५३ ॥
पातालाम्बरभूमिस्थाः सर्वलोकनिवासिनः ।
तुम्बुरुर्नारदो हाहाहूहूश्चैव तु सामगाः ॥ ५४ ॥
तन्त्रीमादाय वाद्यांश्चाऽवादयञ्छङ्करोत्सवे ।

ऋषयः कृत्स्नशश्चैव वेदगीतांस्तपोधनाः ॥ ५५ ॥
पुण्यान्वैवाहिकान्मन्त्राञ्जेपुः संहृष्टमानसाः ।
एवं प्रतस्थेगिरिशोवीज्यमानश्चगङ्गया ॥ ५६ ॥
तथा यमुनयाचापाम्पतिनाधृतच्छत्रया ।
स्त्रीभिर्नानाविधालापैर्लाजाभिश्चानुमोदितः ॥ ५७ ॥
महोत्सवेन देवेशो गिरिस्थानं विवेश सः ।
प्रभासत्स्वर्णकलशं तोरणानां शतैर्युतम् ॥ ५८ ॥
वैडूर्यबद्धभूमिस्थं रत्नजैश्च गृहैर्युतम् ।
तत्प्रविश्य स्तूयमानो द्वारमभ्याससाद ह ॥ ५९ ॥
ततो हिमाचलस्तत्र दृश्यते व्याकुलाकुलः ।
आदिशदात्मभृत्यानां महादेव उपस्थिते ॥ ६० ॥

ततो ब्रह्माणमचलो गुरुत्वे प्रार्थयत्तदा । कृत्यानांसर्वभारेषुवासुदेवं च बुद्धिमान्

प्रत्याह च विवाहेऽस्मिन्कुमारीभ्रातरम्विना ।
भविष्यति कथं विष्णो ! लाजहोमादिकर्मसु ॥ ६२ ॥

सुतोहिममनैनाकःसप्रविष्टोऽर्णवेस्थितः।इतिचिन्ताविषण्णंतंविष्णुराहमहामतिः

अत्र चिन्ता न कर्तव्या गिरिराज ! कथञ्चन ।
अहं भ्राता जगन्मातुरेतदेवं च नान्यथा ॥ ६४ ॥
ततः प्रमुदितःशैलःपार्वतीं च स्वलङ्कृताम् ।
सखीभिःकोटिसंख्याभिर्वृतांप्रावेशयत्सदः ॥ ६५ ॥
ततो नीलमयस्तम्भं ज्वलत्काञ्चनकुट्टिमम् ।
मुक्ताजालपरिष्कारंज्वलितौषधिदीपितम् ॥ ६६ ॥
रत्नासनसहस्राढ्यं शतयोजनविस्तृतम् ।
विवाहमण्डपं शर्वो विवेशाऽनुचरावृतः ॥ ६७ ॥
ततः शैलः सपत्नीकः पादौ प्रक्षाल्य हर्षितः ।



भवस्य तेन तोयेनसिषिचे स्वं जगत्तथा ॥ ६८ ॥

पाद्यमाचमनंदत्त्वामधुपर्कंच गां तथा। प्रदानस्य प्रयोगं च सञ्चिन्तयन्तिब्राह्मणाः

दौहित्रीं कव्यवाहानां दद्मि पुत्रीं स्वकामहम् ।
इत्युक्त्वा तस्थिवाञ्छैलो न जानाति हरस्य सः ॥ ७० ॥

ततःसर्वानपृच्छत्सकुलं कोऽपिनवेदतत्।ततोविष्णुरिदंप्राहपृच्छ्यन्तेऽन्येकिमर्थतः
अज्ञातकुलतां तस्यपृच्छ्यतामयमेव च।अहिरेव अहेःपादान्वेत्तिनान्योहिमाचल !

स्वगोत्रं यदि न ब्रूते न देया भगिनी मम ।
ततो हासस्तदा जज्ञे सर्वेषां सुमहास्वनः ॥ ७३ ॥
निवृत्तश्च क्षणाद्भूयः किंवक्ष्यति हरस्त्विति ।
ततो विमृश्यबहुधाकिञ्चिद्व्रीताननो यथा ॥ ७४ ॥
लज्जाजडः स्मितं चक्रे ततः पार्थ ! स वै हरः ।
ततो विशिष्टा ब्रवति शीघ्रं कालोऽतिवर्तते ॥ ७५ ॥

हरिः प्राह महेशानं बिभ्यदावेदयहं तव। मातामहं च पितरंप्रयोगंश्शृणुभूधर!॥७६॥
आत्मपुत्रायतेशम्भोआत्मदौहित्रकायते।इत्युक्तेविष्णुनासर्वेसाधुसाध्वितितेजगुः

देवोऽप्युदाहरेद्बुद्धिं सर्वेभ्योऽप्यधिकां वराम् ।
ततः शैलस्तथा चोक्त्वा दत्त्वा देवीं च सोदकम् ॥ ७८ ॥

आत्मानंचापिदेवायप्रददौसोदकंनगः। ततःसर्वेतुष्टुवुस्तं विवाहंविस्मयान्विताः
दातामहीभृतांनाथोहोतादेवश्चतुर्मुखः।वरःपशुपतिःसाक्षात्कन्याविश्वारणिस्तथ

ततः स्तुवत्सु मुनिषु पुष्पवर्षे महत्यपि ।
नदत्सु देवतूर्येषु करं जग्राह त्र्यम्बकः ॥ ८१ ॥
देवो देवीं समालोक्य सलज्जां हिमशैलजाम् ।
न तृप्यति नचाह्लादत्साचदेवंवृषध्वजम् ॥ ८२ ॥
तत्र ब्रह्मादिमुनयो देवीमद्भुतरूपिणीम् ।
पश्यन्तः शरणं जग्मुर्मनसा परमेश्वरम् ॥ ८३ ॥

मा मुह्याम पार्वतीं च यथा नारदपर्वतौ ।
ततस्तथैव तच्चके सर्वेषामीप्सितं वचः ॥ ८४ ॥
ततो देवैश्च मुनिभिः संस्तुतः परमेश्वरः ।
प्रविवेश शुभां वेदिं मूर्तिमज्ज्वलनाश्रिताम् ॥ ८५ ॥
वेधाः श्रुतीरितैर्मन्त्रैर्मूर्ति मह्निरुपस्थितैः ।
मूर्तमग्निं जुहाव त्रिः परिक्रम्य च तं हरः ॥ ८६ ॥

लाजाहोमाउभ्राताप्राहतंसस्मितंहरिः । बहवोमिलिताःसन्तिलोकाःसम्मर्दईश्वर सविधानेनरक्ष्याणिभूषणानित्वया हर । ततो हरश्चतं प्राह स्वजनेमाऽतिगोपय

किञ्चित्प्रार्थय दास्यामि प्राह विष्णुस्ततो वरम् ।
त्वयि भक्तिर्दृढा मेऽस्तु स च तद्दुर्लभं ददौ ॥ ८६ ॥

ददतुः सृष्टिसंरक्षां ब्रह्मणे दक्षिणामुभौ । अग्नये यज्ञभागांश्च प्रीतौ हरजनार्दनौ ॥ भृग्वादीनांततोदत्वाश्रुतिरक्षणदक्षिणाम्।ततोगीतैश्चनृत्यैश्चभोजनैश्चयथेप्सितैः महोत्सवैरनेकैश्च विस्मयं समपद्यत । विसृज्य लोकं तं सर्वकिमिच्छादानकैर्भवः

सरस्वत्या च पितरौ देव्याश्चाऽऽश्वास्य दुःखितौ ।
आमन्त्र्य हिमशैलेन्द्रं ब्रह्माणं च सकेशवम् ॥ ६३ ॥
जगम मन्दिरगिरिं गिरिणा सानुगोऽर्चितः ॥ ६४ ॥
ततो गते भगवति नीललोहिते सहोमया गिरिममलं हि भूधरः ।
सबान्धवो रोदति कस्य नो मनो विसंष्ठुलंजगति हि कन्यकापितुः
इमं विवाहं गिरिराजपुत्र्याः शृणोति चाऽध्येति च यो नरः शुचिः
विशेषतश्चाऽपि विवाहमङ्गले स मङ्गले वृद्धिमवाप्नुते चिरम् ॥ ६६ ।

इति श्रीस्कन्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेशमाहात्म्ये हरगौरीविवाहवर्णनं नाम षड्विंशोऽध्यायः

---

# सप्तविंशोऽध्यायः

## कुमारेश माहात्म्ये पार्वतीप्रकोपवर्णनम्

### नारद उवाच

ततो निरुपमं दिव्यंसर्वरत्नमयंशुभम् । ईशाननिर्मितंसाक्षात्सहदेव्याऽऽविशद्गृहम् तत्राऽसौ मन्दरगिरौ सह देव्या भगाक्षहा । प्रासादेतत्र चोद्यानेरैमेसंहृष्टमानसः

एतस्मिन्नन्तरे देवास्ताहकेणाऽतिपीडिताः ।
प्रोत्साहितेनचात्यर्थमयाकलिचिकीर्षुणा ॥ ३ ॥
आसाद्य ते भवं देवं तुष्टुवुर्बहुधा स्तवैः ।
एतस्मिन्नन्तरे देवी प्रोद्वर्तयत गात्रकम् ॥ ४ ॥
उद्वर्तनमलेनाऽथ नरं चक्रे गजाननम् ।
देवानां सस्तवैः पुण्यैः कृपयाऽभिपरिप्लुता ॥ ५ ॥
पुत्रेत्युवाच तं देवी ततः संहृष्टमानसा ।
एतस्मिन्नन्तरे शर्वस्तत्रागत्य वचोऽब्रवीत् ॥ ६ ॥
पुत्रस्तवाऽयं गिरिजे ! शृणु यादृग्भविष्यति ।
विक्रमेण च वीर्येण कृपया सदृशो मया ॥ ७ ॥

यथाऽहं तादृशश्चाऽसौ पुत्रस्तेभविता गुणैःयेचपापादुराचारावेदान्धर्मंद्विषन्तिव

तेषामामरणान्तानि विघ्नान्येष करिष्यति ।
ये च मां नैव मन्यन्ते विष्णुं वाऽपि जगद्गुरुम् ॥ ६ ॥

विघ्निता विघ्नराजेन ते यास्यन्ति महत्तमः । तेषां गृहेषु कलहःसदानैवोपशाम्यति पुत्रस्य तवविघ्नेनसमूलंतस्य नश्यति । येषांनपूज्याःपज्यन्ते क्रोधासत्यपराश्चये

रौद्रसाहसिका ये च तेषां विघ्नं करिष्यति ।
श्रुतिधर्मान्ज्ञातातिधर्मान्पालयन्तिगुरूंश्चये ॥ १२ ॥
कृपालवो गतक्रोधास्तेषां विघ्नं हरिष्यति ।
सर्वेधर्माश्चकर्माणितथानानाविधानिच ॥ १३ ॥
सविघ्नानि भविष्यन्तिपूजयाऽस्यविना शुभे ।
एवं श्रुत्वाउमाप्राहएवमस्तिशङ्करम् ॥ १४ ॥
ततो बृहत्तनुः सोऽभूत्तेजसा द्योतयन्दिशः।ततो गणैःसमंशर्वःसुराणाप्रददौच तम्
यावत्तारकहन्ता वो भवेत्तावदयं प्रभुः ॥ १५ ॥
ततोविघ्नपतिर्देवैःसंस्तुतः प्रणतार्तिहा।चकारतेषां कृत्यानिविघ्नानिदितजन्मनाम्
पार्वती च पुनर्देवी पुत्रत्वे परिकल्प्य च। अशोकस्याऽङ्कुरंवार्भिरवर्द्धयतस्वाहृतैः
सप्तर्षीनथ चाऽऽहूय संस्कारमङ्गलं तरोः ।
कारयामास तन्वङ्गी ततस्तांमुनयोऽब्रुवन् ॥ १८ ॥
त्वयैव दर्शिते मार्गे मर्यादां कर्तुमर्हसि।किं फलं भविता देवि कल्पितैस्तरुपुत्रकैः

देव्युवाच

यो वै निरुदके ग्रामे कूपं कारयते बुधः। यावत्तोयं भवेत्कूपे तावत्स्वर्गे स मोदते
दशकूपसमा वापी दशवापीसमं सरः। दशसरःसमा कन्या दशकन्यासमः क्रतुः॥
दशक्रतुसमः पुत्रो दशपुत्रसमो द्रुमः ॥ २२ ॥
एषैव मम मर्यादा नियता लोकभाविनी।जीर्णोद्धारेकृतेवापि भलंतद्द्विगुणंमतम्
॥ इति श्रीगणेशोत्पत्तिः ॥
ततः कदाचिद्भगवानुमया सह मन्दरे। मन्दिरे हर्षजनने कलधौतमये शुभे ॥२४॥
प्रकीर्णकुसुनामोदमहालिकुलकूजिते। किन्नरोद्गीतसङ्गीतप्रतिशब्दितमध्यके ॥
क्रीडामयूरैर्हंसैश्चश्रुतैश्चैवाऽभिनादिते ।
मौक्तिकैर्विविधै रत्नैर्विनिर्मितगवाक्षके ॥ २६ ॥
तत्र पुण्यकथाभिश्च क्रीडतोरुभयोस्तयोः



प्रादुरभून्महाञ्छब्दः पूरिताम्बरगोचरः ॥ २७
श्रुत्वा कौतुकाद्देवी किमेतदिति शङ्करम्। पर्यपृच्छच्छुभतनुर्हरं विस्मयपूर्वकम्।
तामाह देवीं गिरिशो दृष्टपूर्वास्तु ते त्वया ।
एते गणा मे क्रीडन्ति शैलेऽस्मिंस्त्वत्प्रियाः शुभे ! ॥ २६ ॥
तपसा ब्रह्मचर्येण क्लेशेन क्षेत्रसाधनैः। यैरहं तोषितः पृथ्व्यां त एते मनुजोत्तमाः
मत्समीपमनुप्राप्ता मम लोकं वरानने ! ।
चराचरस्य जगतः सृष्टिसंहारणक्षमाः ॥ ३१ ॥
विनैतान्नैव मे प्रीतिर्नैभिर्विरहितो रमे ।
एते अहमहं चैते तानेतान्पश्य पार्वति ! ॥ ३२ ॥
इत्युक्ता विस्मिता देवी ददृशे तान्गवाक्षके ।
स्थिता पद्मपलाशाक्षीमहादेवेनभाषिता ॥ ३३ ॥
केचित्कृशाह्रस्वदीर्घाःकेचित्स्थूलमहोदराः ।
व्याघ्रेभमेषाजमुखानानाप्राणिमहामुखाः ॥ ३४ ॥
व्याघ्रचर्मपरीधाना नग्ना ज्वालामुखाः परे ।
गोकर्णा गजकर्णाश्च बहुपादमुखेक्षणाः ॥ ३५ ॥
विचित्रवाहनाश्चैवनानायुधधरास्तथा। गीतवादित्रतत्त्वज्ञाःसत्त्वगीतरसप्रियाः
तान्दृष्ट्वा पार्वती प्राह कतिसंख्याभिधास्त्वमी ॥ ३७ ॥

श्रीशङ्कर उवाच

असंख्येयास्त्वमी देविअसंख्येयाभिधास्तथा। जगदापूरितंसर्वमेतैर्भीमैर्महाबलैः
सिद्धक्षेत्रेषु रथ्यासु जीर्णोद्यानेषु वेश्मसु। दानवानां शरीरेषु बालेषून्मत्तकेषु च
एते विशन्ति मुदिता नानाहारविहारिणः ।
ऊष्मपाः फेनपाश्चैव धूम्रपा मधुपायिनः ॥
मदाहाराः सर्वभक्ष्यास्तथाऽन्ये चाऽप्यभोजनाः ॥ ४० ॥
गातनृत्योपहाराश्चनानावाद्यरवप्रियाः। अनन्तत्वादमीषां च वक्तुं शक्यानवैगुणाः

श्रीदेव्युवाच

मनःकिलेन कल्केन य एष च्छुरिताननः। तेजसा भास्कराकारो रूपेण सदृशस्तव

आकर्ण्याऽऽकर्ण्यते देव गणैर्गीतान्महागुणान्।
मुहुर्नृत्यतिहास्यञ्चविदधाति मुहुर्मुहुः ॥ ४३ ॥
सदाशिवशिवेत्येवंविह्वलो वक्ति यो मुहुः।
धन्योऽयमी दृशीयस्य भक्तिस्त्वयिमहेश्वरे ॥ ४४ ॥
एनं विज्ञातुमिच्छामि किन्नामाऽसौ गणस्तव।

श्रीशङ्कर उवाच

स एष वीरको देवि सदा मेऽद्रिसुते! प्रियः ॥ ४५ ॥
नानाश्चर्यगुणाधारः प्रतीहारो मतोऽम्बिके!।

देव्युवाच

ईदृशस्य सुतस्याऽपि ममोत्कण्ठा पुरान्तक! ॥ ४६ ॥
कदाऽहमीदृशं पुत्रं लप्स्याम्यानन्ददायकम्।

शर्व उवाच

एष एव सुतस्तेऽस्तु यावदीदृक्परो भवेत् ॥ ४७ ॥
इत्युक्ता विजयां प्राह शीघ्रमानय वीरकम्।
विजया च ततो गत्वा वीरकं वाक्यमब्रवीत् ॥ ४८ ॥
एहि वीरक! ते देवीगिरिजातोषिता शुभा।
त्वामाह्वयति सा देवी भवस्याऽनुमते स्वयम् ॥ ४९ ॥
इत्युक्तः सम्भ्रमयुतो मुखं सम्मार्ज्यपाणिना।
देव्याःसमीपमागच्छज्जययाऽनुगतःशनैः ॥ ५० ॥
तं दृष्ट्वा गिरिजा प्राह गिरा मधुरवर्णया।
एह्येहि पुत्र दत्तस्त्वं भवेन मम पुत्रकः ॥ ५१ ॥
इत्युक्तोदण्डवद्देवींप्रणम्याऽवस्थितःपुरः।



माता ततस्तमालिङ्ग्यकृत्वोत्सङ्गेचवीरकम् ॥ ५२ ॥
चुचुम्ब च कपोले तं गात्राणि च प्रमार्जयत्।
भूषयामास दिव्यैस्तंस्वयं नानाविभूषणैः ॥ ५३ ॥
एवं सङ्कल्प्य तं पुत्रंलालयित्वा उमा चिरम्।
उवाच पुत्रक्रीडेति गच्छसार्धं गणैरिति ॥ ५४ ॥
ततश्चिक्रीड मध्ये स गणानां पार्वतासुतः।
मुहुर्मुहुःस्वमनसिस्तुवन्भक्तिं सशाङ्करीम् ॥ ५५ ॥
प्रणम्य सर्वभूतानि प्रार्थयाम्यस्मिदुष्करम्।
भक्त्याभजध्वमीशानंयस्याभक्तेरिदंफलम् ॥ ५६ ॥
क्रीडितुं वीरके याते ततो देवी च पार्वती।
नानाकथाभिश्चिक्रीड पुनरेव जटाभृता ॥ ५७ ॥
ततो गिरिसुताकण्ठे क्षिप्तबाहुर्महेश्वरः।
तपसस्तु विशेषार्थं नर्म देवीं किलाऽब्रवीत् ॥ ५८ ॥

सहिगौरतनुःशर्वोविशेषाच्छशिशोभितःरञ्जिताचविभावर्यादेवीनीलोत्पलच्छविः

शर्व उवाच

शरीरे ममतन्वङ्गीसितेभास्यसितद्युतिः भुजङ्गीवासितशुभ्रेसश्लिष्टा चन्दनेतरौ

चन्द्रज्योत्स्नाभिसम्पृक्तातामसी रजनी यथा।
रजनी वा सिते पक्षेदृष्टिदोषं ददासि मे ॥ ६१ ॥
इत्युक्ता गिरिजा तेन कण्ठं शर्वाद्विमुच्यसा।
उवाच कोपरक्ताक्षीभृकुटीविकृतानना ॥ ६२ ॥
स्वकृतेन जनः सर्वो जनेन परिभूयते।
अवश्यमर्थी प्राप्नोति खण्डनां शशिखण्डभृत्।
तपोभिर्दीप्त च रितैर्यत्त्वां प्रार्थितवत्यहम्।
तस्य मे नियमस्यैवमवमानः पदे पदे।

नैवाऽहं कुटिला शर्वविषमा नचधूर्जटे ! ।
स्वदोषैस्त्वं गतः क्षान्तिं तथादोषाकरश्रियः ॥ ६५ ॥
नाहं मुष्णामि नयने नेत्रहन्ता भवान्भव ! ।
भगस्तत्ते विजानाति तथैवेदं जगत्त्रयम् ॥ ६६ ॥
मूर्ध्नि शूलं जनयसे स्वैर्दोषैर्मामधिक्षिपन् ।
यत्त्वं ममाहकृष्णेति महाकालोऽसि विश्रुतः ॥ ६७ ॥
यास्याम्यहंपरित्यक्तुमात्मानं तपसा गिरिम्
जीवन्त्या नास्ति मे कृत्यं धूर्तेन परिभूतया ॥ ६८ ॥
निशम्य तस्या वचनं कोपतीक्ष्णाक्षरं भवः ।
उवाचाऽथ च सम्भ्रान्तो दुर्ज्ञेयचरितो हरः ॥ ६९ ॥
न तत्त्वज्ञाऽसिगिरिजे नाऽहंनिन्दापरस्तव ।
चाटूक्तिबुद्ध्याकृतवान्स्तवाहंनर्मकीर्तनम् ॥ ७० ॥
विकल्पःस्वच्छचित्तेतिगिरिजेषाममप्रिया ।
प्रायेणभूतिलिप्तानामन्यथाचिन्तिताहृदि ॥ ७१ ॥
अस्मादृशानां कृष्णाङ्गि ! प्रवर्तन्तेऽन्यथा गिरः ।
यद्येवं कुपिता भीरु ! न ते वक्ष्याम्यहंपुनः ॥ ७२ ॥
नर्मवादी भविष्यामि जहि कोपं शुचिस्मिते ! ।
शिरसा प्रणतस्तेऽहंरचितस्तेमयाऽञ्जलिः ॥ ७३ ॥
दीनेनाऽप्यपमानेननिन्दितोनैमिविक्रियाम् ।
वरमस्मिविनम्रोऽपिनत्वंदेविगुणान्विता ॥ ७४ ॥
इत्यनेकैश्चाटुवाक्यैः सूक्तैर्देवेनबोधिता ।
कोपं तीव्रं न तत्याज सतीमर्मणि घट्टिता ॥ ७५ ॥
अवष्टब्धावथ क्षिप्त्वा पादौ शङ्करपाणिना ।
विपर्यस्तालका वेगाद्गन्तुमैच्छत शैलजा ॥ ७६ ॥



तस्यां व्रजन्त्यां कोपेन पुनराह पुरान्तकः ।
सत्यं सर्वैरवयवैः सुतेति सदृशी पितुः ॥७७॥
हिमाचलस्य शृङ्गैस्तैर्मेघमालाकुलैर्मनः ।
तथा दुरवगाह्योऽसौ हृदयेभ्यस्तवाऽऽशयः ॥७८॥
काठिन्यं कष्टमस्मिंस्ते वनेभ्योबहुधा गतम् ।
कुटिलत्वं नदीभ्यस्ते दुःसेव्यत्वं हिमादपि ॥७९॥
सङ्क्रान्तं सर्वमेवैतत्तव देवि ! हिमाचलात् ।
इत्युक्ता सा पुनः प्राह गिरिशं शैलजा तदा ॥८०॥
कोपकम्पितधूम्रास्या प्रस्फुरद्दशनच्छदा ।
माशर्वात्मापमानेन निन्दत्वं गुणिनोजनान् ॥८१॥
तवापि दुष्टसम्पर्कात्सङ्क्रान्तंसर्वमेवहि ।
व्यालेभ्योऽनेकजिह्वत्वं भस्मनःस्नेहवन्ध्यता ॥ ८२ ॥
हृत्कालुष्यं शशाङ्कात्ते दुर्बोधत्वं वृषादपि ।
अथवा बहुनोक्तेन अलं वाचा श्रमेण मे ॥८३ ॥
श्मशानवास आसीस्त्वं नग्नत्वान्न तव त्रपा ।
निर्घृणत्वं कपालित्वादेवं कः शक्नुयात्तव ॥८४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डेकुमारेश्वरमाहात्म्ये पार्वतीप्रकोपवर्णनं नाम सप्तविंशोऽध्यायः॥

---

## अष्टाविंशोऽध्यायः

### पार्वत्यातपःकरणार्थं हिमालयेगमनवर्णनम्

नारद उवाच

इत्युक्त्वा मन्दिरात्तस्मान्निर्जगाम हिमाद्रिजा ।

तस्यां व्रजन्त्यां चक्रुश्च गणाः किलकिलध्वनिम् ॥ १ ॥
क्मातर्गच्छसीत्युक्त्वारुदन्तोधाविताःपुरःविष्टभ्यचरणौदेव्यावीरकोबाष्पगद्गदम्
प्रोवाच मातःकिन्त्वेतत्कयासि कुपिता त्वरा।
अहंत्वामनुयास्यामि मातरं स्नेहवत्सलाम् ॥ ३ ॥
नाहं सहिष्ये परुषं गिरीशस्य त्वयोज्झितः ।
पुत्रः पारुष्यपात्रंहि भवेन्मात्राविनापितुः ॥ ४ ॥
उन्नाम्य वदनं पश्चाद्दक्षिणेन तु पाणिना ।
उवाच वीरकं माता मा शोकम्पुत्र भावय ॥ ५ ॥
शैलाग्रात्पतितुं नैव न्याय्यं गन्तुं मया सह ।
वक्ष्यामि पुत्र ! ते योग्यं तत्तु कार्यं त्वया शृणु ॥ ६ ॥
कृष्णेत्युक्ता हरेणाहं निन्दिता च तृणायिता ।
साहंतपःकरिष्यामि यथा गौरीत्वमाप्नुयाम् ॥ ७ ॥
गौराङ्गीलम्पटोह्येष यातायां मय्यनन्तरम् ।
द्वाररक्षा त्वया कार्या नित्यं रन्ध्राण्यवेक्षिणा ॥ ८ ॥
यथा न काचित्प्रविशेद्योषिदत्र हरान्तिके ।
दृष्ट्वा परां स्त्रियं चात्र वदेथा मम पुत्रक ! ॥९ ॥
शीघ्रमेव करिष्यामि ततो युक्तमनन्तरम् ।
एवमस्त्विति तां देवीं वीरकःप्राह साम्प्रतम् ॥ १० ॥
मातुराज्ञामृतह्रदे प्लाविताङ्गो गतज्वरः ।
जगाम त्र्यक्षं सन्द्रष्टुं प्रणिपत्य च मातरम् ॥ ११ ॥
गजवक्त्रं ततः प्राह प्रणम्य समवस्थितम् ।
साश्रुकण्ठं प्रयान्तं नय मामपि पार्वति ! ॥ १२ ॥
गजवक्त्रं हि त्वां बाल मामिवोपहसिष्यति ।
तदागच्छ मया सार्धं या गतिर्मे तवाऽपि सा ॥ १३ ॥



पराभवाद्धि धूर्तानां मरणं साधु पुत्रक ! ।
एवमुक्त्वा समादाय हिमाद्रिं प्रति सा ययौ ॥ १४ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये पार्वत्यास्तपोऽर्थं गमनवर्णनं नामाऽष्टाविंशोऽध्यायः ॥ २८ ॥

---

# एकोनत्रिंशोऽध्यायः

## कुमारेश्वरमाहात्म्ये कुमारस्य सर्वदेवसैन्याधिपत्याभिषेकोत्सववर्णनम्

नारद उवाच

व्रजन्ती गिरिजाऽपश्यत्सखीं मातुर्महाप्रभाम् ।
कुसुमामोदिनीं नाम तस्य शैलस्य देवताम् ॥ १ ॥
साऽपि दृष्ट्वा गिरिसुतां स्नेहविक्लवमानसा ।
क्वपुनर्गच्छसीत्युच्चैरालिङ्ग्योवाच देवता ॥ २ ॥
साऽचास्यै सर्वमाचख्यौ शङ्करात्कोपकारणम् ।
पुनश्चोवाच गिरिजा देवतां मातृसम्मताम् ॥ ३ ॥
नित्यं शैलाधिराजस्य देवतात्वमनिन्दिते ! ।
सर्वं च सन्निधानं च मयि चातीव वत्सला ॥ ४ ॥
तदहं सम्प्रवक्ष्यामि यद्विधेयंतवाऽधुना।अथाऽन्यस्त्रीप्रवेशेतुसमीपे तु पिनाकिनः

त्वयाऽऽख्येयं मम शुभे ! युक्तं पश्चात्करोम्यहम् ।
तथेत्युक्ते तथा देव्या ययौ देवी गिरिं प्रति ॥ ६ ॥
रम्ये तत्र महाशृङ्गे नानाश्चर्योपशोभिते। विभूषणादिसंन्यस्यवृक्षवल्कलधारिणी
तपस्तेपे गिरिसुता पुत्रेण परिपालिता ।
ग्रीष्मे पञ्चाग्निसन्तप्ता वर्षासु च जलोषिता ॥ ८ ॥
स्थण्डिलस्था च हेमन्ते निराहारा तताप सा ।
एतस्मिन्नन्तरे दैत्यो ह्यन्धकस्य सुतोबली ॥ ९ ॥
ज्ञात्वा गतां गिरिसुतां पितुर्वैरमनुस्मरन् ।
आडिर्नाम बकभ्राता रहस्यान्तरप्रेक्षकः ॥ १० ॥
जिते किलान्धके दैत्ये गिरिशेनाऽमरद्विषि ।
आडिश्चकार विपुलं तपो हरजिगीषया ॥ ११ ॥
तमागत्याऽब्रवीद्ब्रह्मातपसापरितोषितः। ब्रूहिकिंवाऽसुरश्रेष्ठ!तपसाप्राप्तुमिच्छसि
ब्रह्माणमाह दैत्यस्तु निर्मृत्युत्वमहं वृणे ।

ब्रह्मोवाच

न कश्चिच्च विना मृत्युं जन्तुरासुर ! विद्यते ॥ १३ ॥
यतस्ततोऽपि दैत्येन्द्र ! मृत्युः प्राप्यः शरीरिणा ।
इत्युक्तो दैत्यसिंहस्तु प्रोवाचाऽम्बुजसम्भवम् ॥ १४ ॥
रूपस्य परिवर्तोऽमे यदा स्यात्पद्मसम्भव! । तदामृत्युर्ममभवेदन्यथात्वमरोह्यहम्
इत्युक्तस्तं तथेत्याह तुष्टः कमलसम्भवः ।
इत्युक्तोऽमरतां मेने दैत्यराज्यस्थितोऽसुरः ॥ १६ ॥
आजगाम स च स्थानं तदा त्रिपुरघातिनः ।
आगतो ददृशे तं च वीरकं द्वार्यवस्थितम् ॥ १७ ॥
तं चासौ वञ्चयित्वा च आडिःसर्पशरीरभृत् ।
अवारितो वीरकेण प्रविवेश हरान्तिकम् ॥ १८ ॥



भुजङ्गरूपं सन्त्यज्य बभूवाऽथ महासुरः ।
उमारूपी छलयितुं गिरिशं मूढचेतनः ॥ १९ ॥
कृत्वोमायास्ततो रूपमप्रतर्क्यमनोहरम् ।
सर्वावयवसम्पूर्णं सर्वाभिज्ञानसम्वृतम् ॥ २० ॥
चक्रे भगान्तरे दैत्यो दन्तान्वज्रोपमान्दृढान् ।
तीक्ष्णाग्रान्बुद्धिमोहेनगिरिशं हन्तुमुद्यतः ॥२१ ॥
कृत्वोमारूपमेवंस स्थितो दैत्यो हरान्तिके ।
तां दृष्ट्वा गिरिशस्तुष्टःसमालिंग्यमहासुरम् ॥२२ ॥
मन्यमानो गिरिसुतां सर्वैरवयवान्तरैः ।
अपृच्छत्साधु ते भावो गिरिपुत्री ह्यकृत्रिमा ॥ २३ ॥
या त्वं मदाशयंज्ञात्वाप्राप्तेहवरवर्णिनि!। त्वयाविरहितःशून्यंमन्येऽस्मिन्भुवनत्रये
प्राप्ता प्रसन्ना या त्वं मां युक्तमेवम्विधं त्वयि ।
इत्युक्ते गूहयंश्चेष्टामुमारूप्यसुरोऽब्रवीत् ॥२५ ॥
याताऽस्मितपसश्चर्तुं कालीवाक्यात्तवाऽतुलम् ।
रतिश्च तत्र मे नाऽभूत्ततः प्राप्ता तवान्तिकम् ॥ २६ ॥
इत्युक्तः शङ्करः शङ्कां किञ्चित्प्राप्यावधारयत् ।
कुपिता मयि तन्वङ्गी प्रत्यक्षा च दृढव्रता ॥२७ ॥
अप्राप्तकामा सम्प्राप्ता किमेतत्संशयो मम ।
रहसीति विचिन्त्याऽथ अभिज्ञानाद्विचारयन् ॥२८ ॥
नापश्यद्वामपार्श्वे तु तस्याङ्कं पद्मलक्षणम् ।
लोम्नामावर्तचरितं ततो देवः पिनाकधृक् ॥२९ ॥
बुद्ध्वा तां दानवीं मायां किञ्चित्प्रहसिताननः ।
मेढ्रे रौद्रास्त्रमाधाय चक्रे दैत्यमनोरथम् ॥ ३० ॥
स रुदन्भैरवान्नादानवसादं गतोऽसुरः ।

अबुध्यद्वीरको नैतदसुरेन्द्रनिषूदनम् ॥ ३१ ॥
हते च मारुतेनाऽऽशुगामिना नगदेवता ।
अपरिच्छिन्नतत्त्वार्था शैलपुत्र्यां न्यवेदयत् ॥ ३२
श्रुत्वा वायुमुखाद्देवी क्रोधरक्ताऽतिलोचना । अशपद्वीरकं पुत्रं हृदयेन विदूयता
मातरं मां परित्यज्य यस्मात्त्वं स्नेहविह्वलाम् ।
विहितावसरः स्त्रीणां शङ्करस्य रहोविधौ ॥ ३४ ॥
तस्मात्ते परुषा रूक्षाजडा हृदयवर्जिता। गणेशाक्षरसदृशाशिलामाताभविष्यति
एवमुत्सृष्टशापाया गिरिपुत्र्यास्त्वनन्तरम् ।
निर्जगाम मुखात्क्रोधःसिंहरूपी महाबलः ॥ ३६ ॥
पश्चात्तापं समाश्रित्य तया देव्याविसर्जितः ।
सतु सिंहःकरालास्यो महाकेसरकन्धरः ॥ ३७ ॥
प्रोद्धूतबललांगूलदंष्ट्रोत्कटगुहामुखः ।
व्यावृतास्यो ललज्जिह्वः क्षामकुक्षिश्चिखादिषुः ॥ ३८ ॥
तस्याऽऽस्ये वर्तितुं देवी व्यवस्यत सती सदा ।
ज्ञात्वा मनोगतं तस्याभगवांश्चतुराननः ॥ ३९ ॥
आजगामाऽऽश्रमपदं सम्पदामाश्रयं ततः ।
आगम्योवाच तां ब्रह्मा गिरिजां मृष्टया गिरा ॥ ४० ॥
किंदेवि प्राप्तुकामाऽसि किमलभ्यं ददामि ते ।
तच्छ्रुत्वोवाच गिरिजा गुरुगौरवगर्भितम् ॥ ४१ ॥
तपसा दुष्करेणाऽऽप्तःपतित्वेशङ्करो मया। समांश्यामलवर्णेतिवहुशःप्रोक्तवान्भवः
स्यामहं काञ्चनाकारा वाल्लभ्येन च संयुता ।
भर्तुर्भूतपतेरङ्के ह्येकतो निर्विशङ्किता ॥ ४३ ॥
तस्यास्तद्भाषितं श्रुत्वा प्रोवाच जलजासनः एवंभवतुभूयस्त्वंभर्तुर्देहार्धधारिणी
ततस्तस्याःशरीरात्तु स्त्री सुनीलाम्बुजत्विषा ।



निर्गता साभवद्भीमा घण्टाहस्ता त्रिलोचना ॥ ४६ ॥
नानाभरणपूर्णाङ्गी पीतकौशेयवासिनी ।
तामब्रवीत्ततो ब्रह्मा देवीं नीलाम्बुजत्विषम् ॥ ४६ ॥
अस्माद्भूधरजादेहसम्पर्कात्त्वं ममाऽऽज्ञया ।
सम्प्राप्ता कृतकृत्यत्वमेकानंशापुराकृतिः ॥ ४७ ॥
य एव सिंहः प्रोद्भूतोदेव्याःक्रोधाद्वरानने ।
स तेऽस्तुवाहनोदेवि !केतौचास्तुमहाबलः ॥ ४८ ॥
गच्छ विन्ध्याचले तत्र सुरकार्यं करिष्यति ।
अत्र शुम्भनिशुम्भौ चहत्वातारकसैन्यपौ ॥ ४९ ॥
पाञ्चालोनाम यक्षोऽयं यक्षलक्षपदानुगः । दत्तस्तेकिङ्करोदेवि महामायाशतैर्युतः
इत्युक्ताकौशिकी देवी तथेत्याह पितामहम् ।
निर्गतायां च कौशिक्यां जाता स्वैराश्रिता गुणैः॥ ५१ ॥
सर्वैः पूर्वभवोपात्तैस्तदास्वयमुपस्थितैः।उमाऽपिप्राप्तसङ्कल्पापश्चात्तापपरायणा
मुहुःस्वं परिनिन्दन्ती जगाम गिरिशान्तिकम् ।
सम्प्रयान्तींच तां द्वारि अपवार्य समाहितः ॥५३ ॥
रुरोध वीको देवीं हेमवेत्रलताधरः ।
तामुवाच च कोपेन तिष्ठतिष्ठ क यासि च ॥५४ ॥
प्रयोजनं न तेऽस्तीह गच्छ यावन्न भर्त्स्यसे ।
देव्या रूपधरोदैत्यो देवंवञ्चयितुं त्विह ॥५५ ॥
प्रविष्टोनच दृष्टोऽसौ स च देवेनघातितः। घातितेचाऽहमाक्षिप्तोनीलकण्ठेनधीमता
काऽपि स्त्री नाऽपि मोक्तव्या त्वया पुत्रेति सादरम् ।
तस्मात्त्वमत्र द्वारिस्था वर्षपूगान्यनेकशः ॥ ५७ ॥
भविष्यसि न चाऽप्यत्र प्रवेशंलप्स्यसेव्रज । एकामेप्रविशेदत्रमातायास्नेहवत्सला
नगाधिराजतनया पार्वती रुद्रवल्लभा ।

इत्युक्ता तुततो देवी चिन्तयामास चेतसा ॥ ५६ ॥
न सा नारी तु दैत्योऽसौ वायोर्नैवाऽवभासत ।
वृथैव वीरकः शप्तो मयाक्रोधपरीतया ॥ ६० ॥
अकार्यंक्रियतेमूढैःप्राप्य क्रोधसमन्वितैः ।
क्रोधेननश्यतेकीर्तिःक्रोधोहन्तिस्थिरांश्रियम् ॥ ६१ ॥
अपरिच्छिन्नसर्वार्था पुत्रं शापितवत्यहम् ।
विपरीतार्थबोद्धृणां सुलभा विपदो यतः ॥ ६२ ॥
सञ्चिन्त्यैवमुवाचेदं वीरकं प्रति शैलजा ।
अधो लज्जाविकारेण वदनेनाम्बुजत्विषा ॥ ६३ ॥
अहं वीरक ते माता मा तेऽस्तु मनसोभ्रमः ।
शङ्करस्याऽस्मिदयितासुतातुहिमभूभृतः ॥ ६४ ॥
मम गात्रस्थितिभ्रान्त्या मा शङ्कां पुत्र ! भावय ।
तुष्टेन गौरता दत्ता मयेयं पद्मयोनिना ॥ ६५ ॥
मयाशप्तोऽस्यविदिते वृत्तान्ते दैत्यनिर्मिते।ज्ञात्वा नारीप्रवेशंतुशङ्करेरहसिस्थिते
न निवर्तयितुं शक्यः शापः किं तु ब्रवीमि ते ।
मानुष्यां तु शिलायां त्वं शिलादात्सम्भविष्यसि ॥ ६७ ॥
पुण्ये चाऽप्यर्बुदारण्ये स्वर्गमोक्षप्रदेनृणाम् । अचलेश्वरलिङ्गंतुवर्तते यत्र वीरक।
वाराणस्यां विश्वनाथसमं तत्फलदं नृणाम् ।
प्रभासस्य च यात्राभिर्दशभिर्यत्फलंनृणाम् ॥ ६६ ॥
तदेकयात्रयाप्रोक्तमर्बुदस्य महागिरेः ।
यत्र तप्त्वा तपो मर्त्या देहधातून्विहाय च ॥ ७० ॥
संसारी न पुनर्भूयान्महेश्वरवचो यथा ।
अर्बुदोयदि लभ्येत सेवितुं जन्मदुःखितैः ॥ ७१ ॥
वाराणसीं च केदारं किं स्मरन्ति वृथैव ते ।



तत्राराध्य भवंदेवं भवान्नन्दीतिनामभृत् ॥ ७२ ॥
शीघ्रमेष्यसि चाऽत्रैव प्रतीहारत्वमाप्स्यसि ।
एवमुक्ते हृष्टरोमा वीरकः प्रणिपत्य ताम् ॥ ७३ ॥
संस्तूय विविधैर्वाक्यैर्मातरं समभाषत ।
धन्योऽहं देवि यो लप्स्ये मानुष्यमतिदुर्लभम् ॥७४ ॥
शापोऽनुग्रहरूपोऽयं विशेषादर्बुदाचले ।
समीपे यस्य पुण्योऽस्ति महीसागरसङ्गमः ॥ ७५ ॥
ऊधः पृथिव्या देशोऽयं यो गिरेश्चार्णवान्तरे ।
तत्र गत्वा महत्पुण्यमवाप्य भवभक्तितः ॥ ७६ ॥
पुनरेष्यामिभोमातरित्युक्त्वाऽभूच्छिलासुतः ।
देवी च प्रविवेशाऽथ भवनं शशिमौलिनः ॥ ७७ ॥

॥ इत्यर्बुदाख्यानम् ॥

ततो दृष्ट्वा च तां प्राह धिङ्नार्य इति त्र्यम्बकः ॥ ७८ ॥
साचप्रणम्यतंप्राहसत्यमेतन्नमिथ्यया। जडःप्रकृतिभागोऽयंनार्यश्चार्हन्तिनिन्दनाम्
पुरुषाणां प्रसादेन मुच्यन्ते भवसागरात्। ततःप्रहृष्टस्तामाह हरोयोग्याऽधुनाशुभे
पुत्रं दास्यामियेन त्वं ख्यातिमाप्स्यसि शोभने ।
ततो रेमेहि देव्या स न नाश्चर्यालयो हरः ॥ ८१ ॥
ततो वर्ष सहस्रेषुदेवास्त्वरितमानसाः। ज्वलनं नोदयामासुर्ज्ञातुंशङ्करचेष्टितम्
द्वारि स्थितं प्रतीहारं वञ्चयित्वा च पावकः ।
पारावतस्य रूपेण प्रविवेश हरान्तिकम् ॥ ८३ ॥
ददृशे तं च देवेशो विनतां प्रेक्ष्य पार्वतीम् ।
ततस्तं ज्वलनंप्राह नैतद्योग्यं त्वयाकृतम् ॥ ८४ ॥
यदिदं क्षुभितं स्थानान्मम तेजोह्यनुत्तमम् ।

गृहाण त्वंसुदुर्बुद्धे नोचा धक्ष्यामि त्वां रुषा ॥ ८५ ॥
भीतस्ततोऽसौ जग्राह सर्वदेवमुखं च सः ।
तेन ते वह्निसहिता विह्वलाश्च सुराःकृताः ॥ ८६ ॥
विपाट्य जठराण्येषां वीर्यमाहेश्वरंततः । निष्क्रान्तंतत्सरोजातंपारदंशतयोजनम्
वह्निश्च व्याकुलीभूतो गङ्गायां मुमुचे सकृत् ।
दह्यमाना च सा देवी तरङ्गैर्बहिरुत्सृजत् ॥ ८८ ॥
जातस्त्रिभुवनख्यातस्तेन च श्वेतपर्वतः । एतस्मिन्नन्तरे वह्निराहूतश्च हिमालये ॥
सप्तर्षिभिर्वह्निहोमं कुर्वद्भिर्मन्त्रवीर्यतः । आगत्य तत्र जग्राह वह्निर्भागं च तं हुतम्
गतेऽह्यस्मिंश्चतत्रस्थःपत्नीस्तेषामपश्यत ।
सुपर्णकदलीस्तम्भनिभास्ताश्चन्द्रलेखया ॥ ९१ ॥
पश्यमानः प्रफुल्लाक्षो वह्निः कामवशं गतः ।
स भूयश्चिन्तयामास न न्याय्यं क्षुभितोऽस्मि यत् ॥ ९२ ॥
साध्वीः पत्नीर्द्विजेन्द्राणामकामाः कामयाम्यहम् ।
पापमेतत्कर्म चोग्रं नश्यामि तृणवत्स्फुटम् ॥ ९३ ॥
कृत्वैतन्नश्यतेकीर्तिर्यावदाचन्द्रतारकम् । एवं संञ्चिन्त्यबहुधागत्वाचैववनान्तरम्
संयन्तुं नाऽभवच्छक्त उपायैर्बहुभिर्मनः ।
ततः स कामसन्तप्तो मूर्च्छितः समपद्यत ॥ ९५ ॥
ततः स्वाहा च भार्याऽस्य बुबुधे तद्विचेष्टितम् ।
ज्ञात्वा च चिन्तयामास प्रहृष्टा मनसि स्वयम् ॥ ९६ ॥
स्वां भार्यामथ मां त्यक्त्वा बहुवासादवज्ञया ।
भार्याः कामयतेनूनंसप्तर्षीणांमहात्मनाम् ॥ ९७ ॥
तदासां रूपमाश्रित्य रमिष्ये तेन चाप्यहम् ।
ततस्त्वङ्गिरसोभार्या शिवानामेतिशोभना ॥ ९८ ॥
तस्या रूपं समाधाय पावकंप्राप्यसाऽब्रवीत् ।



मामग्ने कामसन्तप्तां त्वंकामयितुमर्हसि ॥ ९९ ॥
न चेत्कारिष्यसे देव मृतां मामुपधारय । अहमङ्गिरसो भार्या शिवानाम हुताशन
सर्वाभिः सहिता प्राप्ता ताश्च यास्यन्त्यनुक्रमात् ।
अस्माकं त्वं प्रियो नित्यं त्वच्चित्ताश्च वयं तथा ॥ १०१ ॥
ततः स कामसन्तप्तः सम्बभूवतया सह । प्रीतेप्रीताचसादेवीनिर्जगामवनान्तरात्
चिन्तयन्ती ममेदं चेद्रूपं द्रक्ष्यन्ति कानने ।
ते ब्राह्मणीनामनृतं दोषं वक्ष्यन्ति पावकात् ॥ १०३ ॥
तस्मादेतद्रक्षमाणा गरुडी सम्भवाम्यहम् ।
सुपर्णा सा ततो भूत्वा ददृशे श्वेतपर्वतम् ॥ १०४ ॥
शरस्तम्बैः सुसम्पृक्तं रक्षोभिश्च पिशाचकैः ।
सा तत्र सहसा गत्वा शैलपृष्ठं सुदुर्गमम् ॥ १०५ ॥
प्राक्षिपत्काञ्चनेकुण्डे शुक्रं तद्धारणेऽक्षमा ।
शिष्टानामपिदेवीनां सप्तर्षीणांमहात्मनाम् ।
पत्नीसरूपतां कृत्वा कामयामास पावकम् ॥ १०६ ॥
दिव्यं रूपमरुन्धत्याःकर्तुं न शकितं तया ॥ १०७ ॥
तस्यास्तपःप्रभावेण भर्तुः शुश्रूषणेन च । षट्कृत्वस्तत्तु निक्षिप्तमग्निरेतः कुरूद्वह
कुण्डेऽस्मिंश्चैवबहुले प्रतिपद्येव स्वाहया।ततश्च पावकोदुःखाच्छशोचच मुमोहच
आः पापं कृतमित्येव देहन्यासेऽकरोन्मतिम् ।
ततस्तं खेचरी वाणी प्राह मा मरणं कुरु ॥ ११० ॥
भाव्यमेतच्च भाव्यर्थात्को हि पावकमुच्यते। भाव्यर्थेनापियत्तेचपरदारोपसेवनम्
कृतं तच्चेतसा तेन त्वामजीर्णं प्रवेक्ष्यति। श्वेतकेतोर्महायज्ञे घृतधाराभितर्पितम्
शोकं च त्यज नैतास्ताःस्वाहैवेयंतवप्रिया। श्वेतपर्वतकुण्डस्थंपुत्रंत्वंद्रष्टुमर्हसि
ततो वह्निस्तत्र गत्वा ददृशे तनयं प्रभुम् ॥ ११३ ॥

अर्जुन उवाच

कस्मात्स्वाहाऽकरोद्रूपं षण्णां तासां महामुने ! ॥ ११४ ॥
यत्ताभर्तृपराः साध्व्यस्तपस्विन्योऽग्निसन्निभाः ।
न बिभेति च किं ताभ्यः षड्भ्यः स्वाहाऽपराधिनी ॥
भर्तृभक्त्या जगद्दग्धुं यतः शक्ताश्च ता मुने ! ॥ ११५ ॥

नारद उवाच

सत्यमेतत्कुरुश्रेष्ठ ! शृणु तच्चाऽपि कारणम्।येनतासांकृतंरूपंन वा शापंददुश्चताः
यत्र तद्वह्निनाक्षिप्तं रुद्रतेजः सकृत्पुरा ।
गङ्गायां तत्र सस्नुस्ताः षट्पत्न्योऽज्ञानभावतः ॥ ११७ ॥
ततस्ता विह्वलीभूतास्तेजसा तेन मोहिताः ।
लज्जया च स्वभर्तृणां गङ्गातीरस्थिता रहः ॥ ११८ ॥
एतदन्तरमालोक्यचिकीर्षन्तीमनीषितम्।स्वाहाशरीरमाविश्यतासांतेजोजहारत
चिक्रीड वह्निजायाऽपियथा ते कथितं मया ॥ १२० ॥
उपकारमिमंताभिःस्मरन्तीभिश्चभारत । न शप्तासायतःशापोनदेयश्चापकारिणि
ततः सप्तर्षयो ज्ञात्वा ज्ञानेनाऽशुचितां गताः ।
तत्यजुःषट्तदापत्नीर्विनादेवीमरुन्धतीम् ॥ १२२ ॥
विश्वामित्रस्तु भगवान्कुमारं शरणं गतः ।
स्तवं दिव्यंसम्प्रचक्रे महासेनस्य चापि सः ॥ १२३ ॥
अष्टोत्तरशतं नाम्नां शृणु त्वं तानि फाल्गुन ! ।
जपेन येषां पापानि यान्ति ज्ञानमवाप्नुयात् ॥ १२४ ॥
त्वं ब्रह्मवादी त्वं ब्रह्मा ब्रह्म ब्राह्मणवत्सलः ।
ब्रह्मण्यो ब्रह्मदेवश्च ब्रह्मदो ब्रह्मसंग्रहः ॥ १२५ ॥
त्वं परं परमं तेजो मङ्गलानां च मङ्गलम् ।
अप्रमेयगुणश्चैव मन्त्राणां मन्त्रगोभवान् ॥ १२६ ॥



त्वं सावित्रीमयो देव! सर्वत्रैवाऽपराजितः। मन्त्रः शर्वात्मको देवःषडक्षरवतांवरः
माली मौली पताकी च जटी मुण्डी शिखण्ड्यपि ।
कुण्डली लाङ्गली बालः कुमारः प्रवरो वरः ॥ १२८ ॥
गवाम्पुत्रःसुरारिघ्नःसम्भवोभवभावनः।पिनाकीशत्रुहाश्वेतोगूढःस्कन्दःकराग्रणीः
द्वादशो भूर्भुवो भावी भुवः पुत्रो नमस्कृतः ।
नागराजः सुधर्मात्मा नाकपृष्ठःसनातनः ॥ १३० ॥
त्वं भर्ता सर्वभूतात्मा त्वंत्राता त्वंसुखावहः ।
शरदक्षःशिखी जेता षड्वक्त्रोभयनाशनः ॥ १३१ ॥
हेमगर्भो महागर्भो जयश्च विजयेश्वरः ।
त्वं कर्ता त्वं विधाता चनित्योनित्यारिमर्दनः ॥ १३२ ॥
महासेनो महातेजा वीरसेनश्च भूपतिः ।
सिद्धासनः सुराध्यक्षो भीमसेनो निरामयः ॥ १३३ ॥
शौरिर्यदुर्महातेजा वीर्यवान्सत्यविक्रमः ।
तेजोगर्भोऽसुररिपुः सुरमूर्तिः सुरोर्जितः ॥ १३४ ॥
कृतज्ञो वरदः सत्यः शरण्यः साधुवत्सलः ।
सुव्रतः सूर्यसङ्काशो वह्निगर्भः कणोभुवः ॥ १३५ ॥
पिप्पली शीघ्रगो रौद्रो गाङ्गेयो रिपुदारणः ।
कार्त्तिकेयःप्रभुःक्षन्ता नीलदंष्ट्रोमहामनाः ॥ १३६ ॥
निग्रहो निग्रहाणां च नेता त्वं सुरनन्दनःप्रग्रहःपरमानन्दः क्रोधघ्नस्तार उच्छ्रितः
कुक्कुटी बहुली दिव्यः कामदो भूरिवर्धनः ।
अमोघोऽमृतदो ह्यग्निः शत्रुघ्नः सर्वमोदनः ॥ १३८ ॥
अव्ययोह्यमरःश्रीमानुन्नतोह्यग्निसम्भवः। पिशाचराजःसूर्याभःशिवात्माशिवनन्दनः
अपारपारो दुर्ज्ञेयः सर्वभूतहिते रतः ।
अग्राह्यः कारणं कर्ता परमेष्ठी परं पदम् ॥ १४० ॥

अचिन्त्यः सर्वभूतात्मा सर्वात्मा त्वं सनातनः ।
एवं स सर्वभूतानां संस्तुतः परमेश्वरः ॥ १४१ ॥
नाम्नामष्टशतेनाऽयं विश्वामित्रमहर्षिणा ।
प्रसन्नमूर्तिराहेदं मुनीन्द्रं व्रियतामिति ॥ १४२ ॥
मम त्वया द्विजश्रेष्ठ ! स्तुतिरेषा निरूपिता ।
भविष्यति मनोऽभीष्टप्राप्तये प्राणिनांभुवि ॥ १४३ ॥
विवर्धते कुले लक्ष्मीस्तस्य यःप्रपठेदिदम् ।
न राक्षसाःपिशाचा वा न भूतानि नचापदः ॥ १४४ ॥
विघ्नकारीणितद्गेहेयत्रैवसंस्तुवन्तिमाम्।दुःस्वप्नंचनपश्येत्सबद्धोमुच्येतबन्धनात
स्तवस्याऽस्य प्रभावेण दिव्यभावः पुमान्भवेत् ।
त्वं च मां श्रुतिसंस्कारैः सर्वैः संस्कर्तुमर्हसि ॥ १४६ ॥
संस्काररहितं जन्म यतश्च पशुवत्स्मृतम्। त्वं च मद्वरदानेन ब्रह्मर्षिश्च भविष्यसि
ततोमुनिस्तस्य चक्रे जातकर्मादिकाःक्रियाः ।
पौरोहित्यं तथा भेजे स्कन्दस्यैवाऽऽज्ञयाप्रभुः ॥ १४८ ॥
ततस्तं वह्निरभ्यागाद्ददर्श च सुतं गुहम् ।
षट्छीर्षं द्विगुणश्रोत्रं द्वादशाक्षिभुजक्रमम् ॥ १४९ ॥
एकग्रीवं चैककायं कुमारं सव्यलोकयत् ।
कलिलं प्रथमे चाह्नि द्वितीये व्यक्तितां गतम् ॥ १५० ॥
तृतीयायां शिशुर्जातश्चतुर्थ्यां पूर्ण एवच ।
पञ्चम्यां संस्कृतःसोऽभूत्पावकं चाप्यपश्यत ॥ १५१ ॥
ततस्तं पावकःपार्थ! आलिलिङ्ग चुचुम्ब च ।
पुत्रेति चोक्त्वातस्मै स शक्त्यस्त्रमददात्स्वयम् ॥ १५२ ॥
स च शक्तिं समादाय नमस्कृत्य च पावकम् ।
श्वेतशृङ्गं समारूढो मुखैः पश्यन्दिशो दश ॥ १५३ ॥



व्यनदद्भैरवं नादं त्रासयन्सासुरं जगत्। ततः श्वेतगिरेः शृङ्गं रक्षः पञ्चदशावृतम् ॥
बिभेद तरसा शक्त्या शतयोजनविस्तृतम् ।
तदेकेन प्रहारेण खण्डशः पतितं भुवि ॥ १५५ ॥
चूर्णीकृता राक्षसास्ते सततं धर्मशत्रवः ।
ततः प्रव्यथिता भूमिर्व्यशीर्यत समन्ततः ॥ १५६ ॥
भीताश्च पर्वताः सर्वे चुक्रुशुः प्रलयाद्यथा ।
भूतानि तत्र सुभृशं त्राहित्राहीतिचोज्जगुः ॥ १५७ ॥
एवं श्रुत्वा ततो देवा वासवं सह तेऽब्रुवन् ।
येनैकेन प्रहारेण त्रैलोक्यं व्याकुलीकृतम् ॥ १५८ ॥
स सङ्क्रुद्धः क्षणाद्विश्वं संहरिष्यति वासव !।
वयं च पालनार्थाय सृष्टा देवेन वेधसा ॥ १५९ ॥
तच्च त्राणं सदा कार्यं प्राणैःकण्ठगतैरपि।अस्माकंपश्यतामेवंयदिसंक्षोभ्यतेजगत्
धिक्ततो जन्म वीराणां श्लाघ्यं हि मरणं क्षणात् ।
तदस्माभिः सहैनं त्वं क्षन्तुमर्हसि वासव ! ॥ १६१ ॥
एवमुक्तस्तथेत्युक्त्वा देवैः सार्धं तमभ्ययात् ।
विधित्सुस्तस्यवीर्यंस शक्रस्तूर्णतरंतदा ॥ १६२ ॥
उग्रं तच्च महावेगं देवानीकं दुरासदम् ।
नर्दमानं गुहः प्रेक्ष्य ननाद जलधिर्यथा ॥ १६३ ॥
तस्य नादेन महता समुद्भूतोदधिप्रभम् । बभ्राम तत्रतत्रैव देवसैन्यमचेतनम् ॥
जिघांसूनुपसम्प्राप्तान्देवान्दृष्ट्वा स पावकिः ।
विससर्ज्ज मुखात्तत्रप्रवृद्धाःपावकार्चिषः ॥ १६५ ॥
अदहद्देवसैन्यानि चेष्टमानानि भूतले । ते प्रदीप्तशिरोदेहाः प्रदीप्तायुधवाहनाः ॥
प्रच्युताः सहसा भान्ति दिवस्तारागणाइव ।
दह्यमानाः प्रपन्नास्ते शरणं पावकात्मजम् ॥ १६७ ॥

देवावज्रधरंप्रोचुस्त्यजवज्रं शतक्रतो ! । उक्तो देवैस्तदाशक्रःस्कन्दे वज्रमवासृजत्

तद्विसृष्टं जवानाऽऽशु पार्श्वं स्कन्दस्य दक्षिणम् ।
बिभेद च कुरुश्रेष्ठ ! तदा तस्य महात्मनः ॥ १६६ ॥
वज्रप्रहारात्स्कन्दस्य सञ्जातः पुरुषोऽपरः ।
युवा काञ्चनसन्नाहः शक्तिधृग्दिव्यकुण्डलः ॥ १७० ॥
शाख इत्यभिविख्यातः सोऽपि व्यनदद्‌द्भुतम् ।
ततश्चेन्द्रःपुनःक्रुद्धोहृदिस्कन्दं व्यदारयत् ॥ १७१ ॥
तत्रापि तादृशो जज्ञे नैगमेय इति श्रुतः ।
ततो विनद्य स्कन्दाद्याश्चत्वारस्तंतदाभ्ययुः ॥ १७२ ॥
तदेन्द्रो वज्रमुत्सृज्य प्राञ्जलिः शरणं ययौ ।
तस्याभयं ददौस्कन्दःसहसैन्यस्य सत्तमः ॥ १७३ ॥

ततःप्रहृष्टास्त्रिदशावादित्राण्यभ्यवादयन्।वज्रप्रहारात्कन्याश्चजज्ञिरेऽस्यमहाबलाः

या हरन्ति शिशूञ्जातान्गर्भस्थांश्चैव दारुणाः ।
काकी च हिलिमा चैव रुद्रा च वृषभा तथा ॥ १७५ ॥

आयापलालामित्राचसप्तैताःशिशुमातरःएतासांवीर्यसम्पन्नःशिशुश्चाऽभूत्सुदारुणः

स्कन्दप्रसादजः पुत्रो लोहिताक्षो भयङ्करः ।
एषवीराष्टकःप्रोक्तःस्कन्दमातृगणोऽद्भुतः ॥ १७७ ॥
पूजनीयः सदा भक्त्या सर्वापस्मारशान्तिदः ।
उपातिष्ठत्ततःस्कन्दं हिरण्यकवचस्रजम् ॥ १७८ ॥
लोहितांबरसम्वीतंत्रैलोक्यस्याऽपिसुप्रभम् ।
युवानं श्रीःस्वयम्भेजेतंप्रणम्यशरीरिणी ॥ १७९ ॥

श्रिया जुष्टश्च तम्प्राहुः सर्वेदेवाः प्रणम्य वै। हिरण्यवर्ण! भद्रं ते लोकानांशङ्करोभव

भवानिन्द्रोऽस्तु नो नाथ त्रैलोक्यस्य हिताय वै ॥ १८१ ॥

स्कन्द उवाच



किमिन्द्रः सर्वलोकानां करोतीहसुरोत्तमाःकथं देवगणांश्चैवपातिनित्यंसुरेश्वरः

देवा ऊचुः

इन्द्रो दिशति भूतानांबलंतेजःप्रजासुखम्।प्रज्ञांप्रयच्छतितथासर्वान्दायान्सुरेश्वरः

दुर्वृत्तानां स हरति वृत्तस्थानं प्रयच्छति ।
अनुशास्ति च भूतानि कार्येषु बलवत्तरः ॥ १८४ ॥
असूर्ये च भवेत्सूर्यस्तथाऽचन्द्रे च चन्द्रमाः ।
भवत्यग्निश्च वायुश्च पृथिव्यां जीवकारणम् ॥ १८५ ॥

एतदिन्द्रेण कर्तव्यमिन्द्रो हि विपुलं बलम् । त्वंचेन्द्रोभवनोवीरतारकंजहितेनमः

इन्द्र उवाच

त्वं भवेन्द्रोमहाबाहो ! सर्वेषां नः सुखावहः ।
प्रणम्य प्रार्थये स्कन्द ! तारकं जहि रक्ष नः ॥ १८७ ॥

स्कन्द उवाच

शाधि त्वमेव त्रैलोक्यं भवानिन्द्रोऽस्तु सर्वदा ।
करिष्ये चेन्द्रकर्माणि न ममेन्द्रत्वमीप्सितम् ॥ १८८ ॥

त्वमेव राजा भद्रन्ते त्रैलोकस्य ममैव च । करोमिकिंचतेशक्र ! शासनं ब्रूहितन्मम

इन्द्र उवाच

यदिसत्यमिदंवाक्यंनिश्चयाद्भाषितंत्वया।अभिषिच्यस्व देवानांसैना पत्येमहाबल

अहमिन्द्रो भविष्यामि तव वाक्याद्यशोऽस्तु ते ॥ १९० ॥

स्कन्द उवाच

दानवानां विनाशाय देवानामर्थसिद्धये । गोब्राह्मणस्यचार्थाय एवमस्तुवचस्तव

इत्युक्ते सुमहानादः सुराणामभ्यजायत ।
भूतानां चापि सर्वेषां त्रैलोक्याकम्पकारकः ॥ १९२ ॥
जयेति तुष्टुवुश्चैनं वादित्राण्यभ्यवादयन् ।
ननृतुस्तुष्टुवुश्चैनं करावातांश्च चक्रिरे ॥ १९३ ॥

तेन शब्देन महता विस्मितानगनन्दिनी।शङ्करं ग्राहको देव ! नादोऽयमतिवर्तते

रुद्र उवाच

अद्य नूतं प्रहृष्टानांसुराणांविविधा गिरः। श्रयन्तेचतथादेवि!यथा जातःसुतस्तव

गवां च ब्राह्मणानां च साध्वीनां च दिवौकसाम् ॥

मार्जयिष्यति चाऽश्रूणि पुत्रस्ते पुण्यवत्यपि ॥ १९६ ॥

एवं वदति सादेवीद्रष्टुं तमुत्सुकाऽभवत् । शङ्करश्चमहातेजाःपुत्रस्नेहाधिकोयतः

वृषभं तत आरुह्य देव्या सह सत्सुकः ।

सगणो भव आगच्छत्पुत्रदर्शनलालसः ॥ १९८ ॥

ततो ब्रह्मा महासेनं प्रजापतिरथाऽब्रवीत् ।

अभिगच्छ महादेवं पितरं मातरं प्रभो ! ॥ १९९ ॥

अनयोर्वीर्यसंयोगात्तवोत्पत्तिस्तु प्राथमी ।

एवमस्त्वितिचाप्युक्त्वामहासेनोमहेश्वरम् ॥ २०० ॥

अपूजयदमेयात्मा पितरं मातरं च ताम् ।

ततस्तमालिङ्ग्य सुतं चिरं संयोज्य चाशिषः ॥ २०१ ॥

चिरं जहृषतुश्चोभौ पार्वतीपरमेश्वरौ ।

सिद्धसारस्य तत्वं च ददौ तुष्टोऽस्य शङ्करः ॥ २०२ ॥

देवी प्रकृतिमोक्षं च तुष्टाहर्षपरिप्लुता । एतस्मिन्नेवकालेतु षड्देव्यस्तं समागमन्

ऋषिभिस्ताः परित्यक्तास्तं पुत्रेति जगुस्तदा ।

पार्वती च ततः प्राह मम पुत्रो न वस्त्वयम् ॥ २०४ ॥

स्वाहा ममेति च प्राह पावकश्च ममेति च । रुद्रो ममेति च प्राहममदेवनदीतिच

चक्रुस्ते कलहं घोरं विवदन्तः परस्परम् ॥

पुत्रस्नेहो हि बलवान्पार्थकिंकिन कारयेत् ॥ २०६ ॥

ततस्तान्प्रहसन्नाह विवादो युज्यते न च ।

सर्वेषां वो गुहः पुत्रो मत्तो वै क्रियतां वरः ॥ २०७ ॥



ततःप्राहुश्चषड्देव्यःस्वर्गोनोह्यक्षयोभवेत्। तथेतिताग़ुहःप्राहशक्रस्तत्रान्तरेऽब्रवीत्

रोहिण्याश्चानुजा स्कन्दः स्पर्धमानाभिजित्स्वसा ।

इच्छन्ती ज्येष्ठतां देवी पृथक्त्वं च तपोरता ॥ २०९ ॥

ततः प्रभृति मूढोऽस्मि तत्स्थाने स्थापय प्रभो ! ।

ततस्तथेतिच प्रोक्ते कृत्तिकास्ता दिवंगताः ॥२१० ॥

नक्षत्रं सप्तशीर्षाभं भाति तद्वह्निदैवतम् ।

अथैनब्रवीत्स्वाहा प्रिया नाहं महार्चिषः ॥

तदग्रे प्रियतां देहि सहवासं सदैव च ॥ २११ ॥

स्कन्द उवाच

हव्यं कव्यं च यत्किञ्चिद्द्विजा होष्यन्ति पावके ॥ २१२ ॥

सत्तेनाम्नाप्रदास्यन्तिवासःसार्धंभवेत्तव।पावकःप्रार्थयामासयज्ञभागान्पुनःसुतान्

स चाप्याहाऽद्यप्रभृति यज्ञभागानवाप्नुहि ।

इतरे प्रार्थयामासुःख्यातोनस्त्वं सुतो भवः ॥ २१४ ॥

एवमेवेति तानाह स्कन्दस्तद्धि सुदुर्लभम् । ततस्तंयोगिनःसर्वे सम्भूयसनकादयः

अभ्यषिञ्चन्गिरौ तस्मिन्योगिनामाधिपत्यके ॥ २१५ ॥

योगीश्वरमिति प्राहुस्ततस्तं योगिनस्तथा। जहृषुर्देवताश्चैवनानावाद्यान्यवादयन्

अभिषिक्तेन तेनाऽसौ शुशुभे श्वेतपर्वतः ।

आदित्येनेवांशुमता सुरम्य उदयाचलः ॥ २१७ ॥

ततो देवाः सगन्धर्वा नृत्यन्त्यप्सरसस्तथा। हृष्टानांसर्वभूतानांश्रूयतेनिनदोमहान्

एवं सेन्द्रं जगत्सर्वं श्वेतपर्वतसंस्थितम्। प्रहृष्टं प्रेक्ष्य तं स्कन्दंनच तृप्यतिदर्शनात्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये स्कन्दकुमारस्य सर्वदेवसैनाधिपत्याभिषेकोत्सववर्णनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

# त्रिंशोऽध्यायः

## कार्त्तिकेयस्य सेनानीत्वेऽभिषेकवर्णनम्

नारद उवाच

ततःस्कन्दःसुरैः सार्धं श्वेतपर्वतमस्तकात् ।
उत्तीर्य तारकं हन्तुं दक्षिणां स दिशं ययौ ॥ १ ॥
ततः सरस्वतीतीरे यानिभूतानिनारद! ग्रहाश्चोपग्रहाश्चैववेतालाःशाकिनीगणाः
उन्मादा ये ह्यपस्माराः पलादाश्च पिशाचकाः ।
देवैस्तेषामाधिपत्ये सोऽभ्यषिच्यत पावकिः ॥ ३ ॥
यथातेनैवमर्यादांसन्त्यजन्तिदुराशयाःएतैस्तस्मात्समाक्रान्तःशरण्यंपावकिंव्रजेत्
अप्रकीर्णेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितम् ।
आस्तिकं स्कन्दभक्तं च वर्जयन्ति ग्रहादिकाः ॥ ५ ॥
महेश्वरं ( स्य ) च ये भक्ता भक्ता नारायणं ( स्य ) च ये ।
तेषां दर्शनमात्रेण नश्यन्ते ते ( ऽति ) विदूरतः ॥ ६ ॥
ततः सर्वैः सुरैः सार्धं महातीरं ययौ गुहः। तत्रदेवैःप्रकथितंमहीमाहात्म्यमुत्तमम्
शृण्वन्विसिष्मिये स्कन्दः प्रणनाम च तां नदीम् ।
ततो महीदक्षिणतस्तीरमाश्रित्य धिष्ठितम् ॥ ८ ॥
प्रणम्य शक्रप्रमुखा गुहं वचनमब्रुवन् ।
अभिषिक्तं विना स्कन्द ! सेनापतिमकल्मषम् ॥ ९ ॥
न शर्म लभते सेना तस्मात्त्वमभिषेचय ।
महीसागरसम्भूतैः पुण्यैश्चापि शिवैर्जलैः ॥ १० ॥



अभिषेक्ष्यामहे त्वां च तत्र नो द्रष्टुमर्हसि ।
यथा हस्तिपदे सर्वपदान्तर्भाव इष्यते ॥ ११ ॥
सर्वतीर्थान्तरस्थानं तथाऽर्णवमहीजले ।
सर्वभूतमयो यद्वत्त्र्यम्बकः परिकीर्त्यते ॥ १२ ॥
सर्वतीर्थमयस्तद्वन्महीसागरसङ्गमः ।
अर्धनारीश्वरं रूपं यथा रुद्रस्य सर्वदम् ॥ १३ ॥
तथा महीसमुद्रस्य स्नानं सर्वफलप्रदम् ।
येनाऽत्र पितरः स्कन्द तर्पिता भक्तिभावतः ॥ १४ ॥
तेन सर्वेषु तीर्थेषु तर्पिता नाऽत्र संशयः ।
न चैतद्धृदि मन्तव्यं क्षारमेतज्जलं हि यत् ॥ १५ ॥
यथा हि कटुतिक्तादि गवा ग्रस्तं हि क्षीरदम् ।
एवमेतत्त्विदं तोयं पितृणां तृप्तिदायकम् ॥ १६ ॥
एवं ब्रुवत्सु देवेषु कपिलोऽपि मुनिर्जगौ । सत्यमेतदुमापुत्र! सर्वतीर्थमयी मही ॥
कर्दमो यस्त्वहमपि ज्ञात्वा तीर्थमहागुणान् ।
सर्वां भुवं परित्यज्य कृत्वा ह्याश्रममास्थितः ॥ १८ ॥
ततो महेश्वरः प्राह सत्यमेतत्सुरोदितम्। ब्रह्माद्यास्तंतथाप्राहुरत्रभूयोऽप्यथोगुरुः
अत्राभिषेकंतेवीर ! करिष्यामः समादिश ।
ततःसुविस्मितस्तत्र स्नात्वा स्कन्दोमहामनाः ॥ २० ॥
अभिषिञ्चन्तु मां देवा इतितानब्रवीद्वचः ।
ततोऽभिषेकसम्भारान्ससर्वान्सम्भृत्यशास्त्रतः ॥ २१ ॥
जुहुवुर्मन्त्रपूतेऽग्नौ चत्वारो मुख्यऋत्विजः ।
ब्रह्माच कपिलोजीवोविश्वामित्रश्चतुर्थकः ॥ २२ ॥
अन्ये च शतशस्तत्र मुनयो वेदपारगाः ।
तत्राऽद्भुतं महादेवो दर्शयामास भारत ! ॥ २३ ॥

यदग्निकुण्डमध्यस्थो लिङ्गमूर्तिर्व्यदृश्यत ।
अहमेवाऽग्निमध्यस्थो हविर्गृह्णामिनित्यशः ॥ २४ ॥
एतत्संदर्शनार्थाय लिङ्गमूर्तिरभूद्विभुः ।
तल्लिङ्गमतुलं देवा नमश्चक्रुर्मुदान्विताः ॥ २५ ॥
सर्वपापापहं पार्थ ! सर्वकामफलप्रदम् ।
तत्र होमावसाने च दत्ते हिमवताशुभे ! ॥ २६ ॥
दिव्यरत्नान्विते स्कन्दोनिषण्णःपरमासने। सर्वमङ्गलसम्भारैर्विधिमन्त्रपुरस्कृतम्
अभ्यषिंचंस्ततो देवा ! कुमारं शङ्करात्मजम् ।
इन्द्रो विष्णुर्महावीर्यो ब्रह्मरुद्रौ च फाल्गुन ! ॥ २८ ॥
आदित्याद्याग्रहाःसर्वे तथोभावनिलानलौ ।
आदित्यावसवोरुद्राःसाध्याश्चैवाश्विनावुभौ ॥ २९ ॥
विश्वेदेवाश्च मरुतो गन्धर्वाप्सरसस्तथा ।
देवब्रह्मर्षयश्चैव बालखिल्या मरीचिपाः ॥ ३० ॥
विद्याधरा योगसिद्धाः पुलस्त्यपुलहादयः ।
पितरः कश्यपोऽत्रिश्च मरीचिर्भृगुरङ्गिराः ॥ ३१ ॥
दक्षोऽथ मनवो ये च ज्योतींषि ऋतवस्तथा ।
मूर्तिमत्यश्च सरितो महीप्रभृतिकास्तथा ॥ ३२ ॥
लवणाद्याः समुद्राश्च प्रभासाद्याश्च तीर्थकाः ।
पृथिवीद्यौर्दिशश्चैवपादपाःपर्वतास्तथा ॥ ३३ ॥
अदित्याद्या मातरश्च कुर्वन्त्यो गुहमङ्गलम् ।
वासुकिप्रमुखा नागास्तथोभौ गरुडारुणौ ॥ ३४ ॥
वरुणो धनदश्चैव यमः सानुचरस्तथा । राक्षसो निर्ऋतिश्चैवभूतानिचपलाशनाः
धर्मो बृहस्पतिश्चैव कपिलो गाधिनन्दनः ।
बहुलत्वाच्च ये नोक्ताविविधादेवतागणाः ॥ ३६ ॥



ते च सर्वे महीकूले ह्यभ्यषिञ्चन्मुदागुहम् ।
ततो महास्वनामुग्रां देवदैत्यादिदर्पहाम् ॥ ३७ ॥
ददौ पशुपतिस्तस्मै सर्वभूतमहाचमूम् ।
विष्णुर्ददौ वैजयन्तीं मालां बलविवर्धिनीम् ॥ ३८ ॥
उमा ददौ चारजसी वाससी सूर्यसप्रभा ।
गङ्गा कमण्डलुं दिव्यममृतोद्भवमुत्तमम् ॥ ३९ ॥
मही महानदी तस्य चाऽक्षमालां ससागरा ।
ददौ मुदा कुमाराय दण्डंचैव बृहस्पतिः ॥ ४० ॥
गरुडो दयितं पुत्रं मयूरं चित्रबर्हिणम् ।
अरुणस्ताम्रचूडं च प्रददौ चरणायुधम् ॥ ४१ ॥
छागं व वरुणो राजा बलवीर्यसमन्वितम् ।
कृष्णाजिनं तथा ब्रह्मा ब्रह्मण्याय ददौजयम् ॥ ४२ ॥
चतुरोऽनुचरांश्चैव महावीर्यान्बलोत्कटान् ।
नन्दिसेनं लोहिताक्षं घण्टाकर्णंचमानसान् ॥ ४३ ॥
चतुर्थं चाप्यतिबलंख्यातंकुसुममालिनम् । ततःस्थाणुर्ददौदेवोमहापारिषदंक्रतुम्
स हि देवासुरे युद्धे दैत्यानां भीमकर्मणाम् ।
जघान दोर्भ्यां सङ्क्रुद्धः प्रयुतानि चतुर्दश ॥ ४५ ॥
यमः प्रादादनुचरौयमकालोपमौतदा। उन्माथं च प्रमाथं च महावीर्यौ महाद्युती
सुभ्राजौ भास्करस्यैव यौ सदाचानुयायिनौ ।
तौसूर्यः कार्तिकेयाय ददौ पार्थ मुदान्वितः ॥ ४७ ॥
कैलासशृङ्गसङ्काशौ श्वेतमाल्यानुलेपनौ ।
सोमोऽप्यनुचरौ प्रादान्मणिं सुमणिमेवच ॥ ४८ ॥
ज्वालाजिह्वं ज्योतिषं च ददावग्निर्महाबलौ ।
परिघं च बलंचैव भीमं च सुमहाबलम् ॥ ४९ ॥

स्कन्दाय त्रीननुचरान्ददौ विष्णुरुरुक्रमः ।
उत्क्रोशं पञ्चजं चैव वज्रदण्डधरावुभौ ॥ ५० ॥
ददौ महेशपुत्राय वासवः परवीरहा ।
तौ हि शत्रून्महेन्द्रस्य जघ्नतुः समरे बहून् ॥ ५१ ॥
वर्धनं बन्धनं चैव आयुर्वेदविशारदौ ।
स्कन्दाय ददतुः प्रीतावश्विनौ भरतर्षभ ॥ ५२ ॥
बलं चाऽतिबलं चैव महावक्त्रौ महाबलौ ।
प्रददौ कार्तिकेयाय वायुश्चानुचरावुभौ ॥ ५३ ॥
घसं चाऽतिघसं वीरौ वरुणश्च ददौ प्रभुः। सुवर्चसंमहात्मानंतथैवाप्यतिवर्चसम्
हिमवान्प्रददौ पार्थ साक्षाद्दौहित्रकाय वै ।
काञ्चनं च ददौ मेरुर्मेघमालिनमेव च ॥ ५५ ॥
उच्छ्रितंचातिशृङ्गंचमहापाषाणयोधिनौ।स्वाहेयायददौप्रीतःसविन्ध्यःपार्षदौशुभौ
संग्रहं विग्रहं चैव समुद्रोऽपि गदाधरौ ।
प्रददौ पार्षदौ वीरौ महीनद्या समन्वितः ॥ ५७ ॥
उन्मादं पुष्पदन्तं च शङ्कुकर्णं तथैव च ।
प्रददावग्निपुत्राय पार्वती शुभदर्शना ॥ ५८ ॥
जयं महाजयं चैव नागौ ज्वलनसूनवे ।
प्रददुर्बलिनां श्रेष्ठौ सुपर्णः पार्षदावुभौ ॥ ५९ ॥
एवं साध्याश्च रुद्राश्च वसवः पितरस्तथा ।
सर्वेजगति ये मुख्याददुःस्कन्दायपार्षदान् ॥ ६० ॥
नानावीर्यान्महावीर्यान्नानायुधविभूषणान्।बहुलत्वान्नशक्यन्तेसंख्यातुं तेचफाल्गुन
मातरश्च ददुस्तस्मै तदा मातृगणान्प्रभो ! ।
याभिर्व्याप्तास्त्रयो लोकाः कल्याणीभिश्चराचराः ॥ ६२ ॥
प्रभावती विशालाक्षी गोपाला गोनसा तथा ।



अप्सुजातावृहद्दण्डीकालिकाबहुपुत्रका ॥ ६३ ॥
भयङ्करी च चक्राङ्गीतीर्थनेमिश्चमाधवी। गीतप्रियाअलाताक्षी चटुलाशलभामुखी
विद्युज्जिह्वा रुद्रकाली शतोलूखलमेखला ।
शतघण्टाकिङ्किणिकाचक्राक्षी चत्वरालया ॥ ६५ ॥
पूतना रोदना त्वामा कोटरामेघवाहिनी ।
ऊर्ध्ववेणीधरा चैव जरायुर्जर्जरानना ॥ ६६ ॥
खटखेटी दहदहा तथा धमधमाजया । बहुवेणी बहुशिरा बहुपादा बहुस्तनी ॥
शतोलूकमुखी कृष्णा कर्णप्रावरणा तथा ।
शून्यालया धान्यवासा पशुदा धान्यदा सदा ॥ ६८ ॥
एताश्चान्याश्च बह्व्यश्चमातरो भरतर्षभ ! ।
बहुलत्वादहं तासां न संख्यातुमिहोत्सहे ॥ ६९ ॥
वृक्षचत्वरवासिन्यश्चतुष्पथनिवेशनाः ।
गुहाश्मशानवासिन्यः शैलप्रस्रवणालयाः ॥ ७० ॥
नानाभरणवेषास्ता नानामूर्तिधरास्तथा ।
नानाभाषायुधधराः परिवव्रुस्तदा गुहम् ॥ ७१ ॥
ततः स शुशुभे श्रीमान्गुहो गुह इवाऽपरः ।
सैनापत्ये चाभिषिक्तो देवैर्नानामुनीश्वरैः ॥ ७२ ॥
ततः प्रणम्य सर्वांस्तानेकैकत्वेन पावकिः ।
व्रियतां वर इत्याह भवब्रह्मपुरोगमान् ॥ ७३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये कार्तिकेयस्य सेनानीत्वेऽभिषेक-वर्णनं नाम त्रिंशोऽध्यायः ॥ ३० ॥

———

# एकत्रिंशोऽध्यायः

## स्कन्दस्यतारकासुरनगरम्प्रतिविजयाभियानवर्णनम्

नारद उवाच

ते चैनं योज्य चाशीर्भिरयाचन्तंवरं गुहम् । एषएववरोऽस्माकंयत्पापंतारकंजहि

एवमस्त्विति तानुक्त्वा योगोयोग इतिब्रुवन् ।
तारकारिर्महातेजा मयूरं चाध्यरोहत ॥ २ ॥
शक्तिहस्तो विनद्याऽथ गुहो देवांस्तदाऽब्रवीत् ।
यद्द्यतारकं पापं नाहं हन्मि सुरोत्तमाः ॥ ३ ॥
गोब्राह्मणावमन्तृणां ततो यामि गतिं स्फुटम् ।
एवं तेन प्रतिज्ञाते शब्दोऽतिसुमहानभूत् ॥ ४ ॥
योगोयोग इति प्राहुराज्ञया शरजन्मनः ।
अरजोवाससी रक्ते वसानः पार्वतीसुतः ॥ ५ ॥
अथाऽग्रे सर्वदेवनांस्थितो वीरोययौ मुदा ।
तस्य केतुरलं भाति चरणायुधशोभितः ॥ ६ ॥

चरणाभ्यांगिरीञ्छक्तोयोविदारयितुं रणे। याचेष्टासर्वभूतानांप्रभाशान्तिर्बलंयथा

तन्मया गुहशक्तिः सा भृशं हस्ते व्यरोचत ।
यद्दाढ्यं सर्वलोकेषु तन्मयं कवचं तथा ॥ ८ ॥

योत्स्यमानस्यवीरस्यदेहेप्रादुरभूत्स्वयम्।धर्मःसत्यमसंमोहस्तेजःकान्तत्वमक्षतिः

बलमोजः कृपाचैव बद्ध्वा करयुगं तथा ।
आदेशकारीण्यग्रेऽस्य स्वयंतस्थुर्महात्मनः ॥ १० ॥
तमग्रे चापि गच्छन्तं पृष्ठतोऽनुययौ हरः ।
यथेनादित्यवर्णेन पार्वत्या सहितः प्रभुः ॥ ११ ॥
निर्मितेन हरेणैव स्वयमीशेनलीलया ।
सहस्रं तस्य सिंहानां तस्मिन्युक्तंरथोत्तमे ॥ १२ ॥
अभीषून्पुरुषव्याघ्र ब्रह्मा च जगृहे स्वयम् ।
ते पिबन्त इवाकाशं त्रासयन्तश्चराचरम् ॥ १३ ॥
सिंहा रथस्य गच्छन्तोनदन्तश्चारुकेसराः ।
तस्मिन्रथे पशुपतिः स्थितो भात्युमयासह ॥ १४ ॥
विद्युता मण्डितः सूर्यः सेन्द्रचापघनो यथा ।
अग्रतस्तस्य भगवान्धनेशो गुह्यकैः सह ॥ १५ ॥
आस्थाय रुचिरं याति पुष्पकं नरवाहनः ।
ऐरावणं समास्थाय शक्रश्चापि सुरैःसह ॥ १६ ॥
पृष्ठतोऽनुययौ यान्तं वरदं वृषभध्वजम् ।
तस्य दक्षिणतो देवा मरुतश्चित्रयोधिनः ॥ १७ ॥
गच्छन्तिवसुभिःसार्धंरुद्रैश्च सह सङ्गताः ।
यमश्च मृत्युना सार्धं सर्वतःपरिवारितः ॥ १८ ॥

घोरैर्व्याधिशतैश्चापिसव्यतोयातिकोपितःयमस्यपृष्ठतश्चापिघोरस्त्रिशिखरःसितः

विजयोनाम रुद्रस्य याति शूलः स्वयं कृतः ।
तमुग्रपाशो भगवान्वरुणः सलिलेश्वरः ॥ २० ॥

परिवार्य शतैर्यातियादोभिर्विविधैर्वृतः । पृष्ठतोविजयस्यापियातिरुद्रस्यपट्टिशः
गदामुशलक्त्याद्यैर्वरप्रहरणैर्वृतः । पट्टिशंचान्वगात्पार्थ अस्त्रं पाशुपतं महत् ॥
बहुशीर्षं महाघोरमेकपादं बहूदरम् । कमण्डलुश्चाऽस्य पश्चान्महर्षिगणसेवितः ॥

तस्य दक्षिणतोभातिदण्डोगच्छञ्छ्रियावृतः ।

भृग्वंगिरोभिःसहितोदेवैरप्यभिपूजितः ॥ २४ ॥
राक्षसाश्चान्यदेवाश्च गन्धर्वा भुजगास्तदा ।
नद्योनदाःसमुद्राश्चमुनयोऽप्सरसांगणाः ॥ २५ ॥
नक्षत्राणि ग्रहाश्चैव जङ्गमं स्थावरं तथा ।
मातरश्च महादेवमनुजग्मुः क्षुधान्विताः ॥ २६ ॥
सर्वेषां पृष्ठतश्चासीत्ताक्ष्यस्थोबुद्धिमान्हरिः ।
पालयन्पृतनां सर्वां स्वपरिवारसम्वृतः ॥ २७ ॥
एवं सैन्यसमोपेत उत्तरं तटमागतः ।
ताम्रप्राकारमाश्रित्य तस्थौ त्र्यम्बकनन्दनः ॥ २८ ॥

स तारकपुरस्यापिपश्यन्वृद्धिमनुत्तमाम् । विसिष्मियेमहासेनःप्रशशंसतपोऽस्यच स्थितःपश्यन्सशुशुभे मयूरस्थोगुहस्तदा। छत्रेणध्रियमाणेनस्वयंसोमसमस्त्विषा

वीज्यमामश्चामराभ्यां वाय्वग्निभ्यां महाद्युतिः ।
मातृभिश्च सुरैर्दत्तैः स्वैर्गणैरपि सम्वृतः ॥ ३१ ॥

ततः प्रणम्य तंशक्रोदेवमध्येवचोऽब्रवीत्। पश्यपश्यमहासेनदैत्यानांबलशालिनाम्

ये त्वां कालं न जानन्ति मर्त्या गृहरताइव ।
एतेषां च गृहे दूतोयस्त्वांशंसतुतारकम् ॥ ३३ ॥
वीराणामुचितं त्वेतत्कीर्तिदं च महाजने ।
अनुज्ञया ततः स्कन्दभक्तं शक्रो धनञ्जय ! ॥ ३४ ॥
ममादिश्यासुरेन्द्रायप्राहिणोद्दौत्ययोग्यकम् ।
अहं स्वयं गन्तुकामःशक्रेणापिचप्रेषितः ॥ ३५ ॥
प्रासादे स्त्रीसहस्राणां प्रावोचं मध्यतोऽप्यहम् ।
असुराधमदुर्बुद्धे शक्रस्त्वामाह तच्छृणु ॥ ३६ ॥
यज्ञगद्दलनादात्तं किल्बिषं दानव त्वया ।
तस्याऽहं नाशकस्तेऽद्यपुरुषश्चेद्भविष्यसि ॥ ३७ ॥



शीघ्रं निःसर पापिष्ठ निःसरिष्यसिचेन्नहि ।
क्षणात्त्वपुरं क्षेप्स्ये पावित्र्यायैव सागरे ॥ ३८ ॥
इति श्रुत्वा रूक्षवाचं क्रुद्धः स्त्रीगणसंवृतः ।
मुष्टिमुद्यम्यमाऽधावद्भीतश्चाहं पलायितः ॥ ३९ ॥
व्याकुलस्तत्र वृत्तान्तं कुमारायन्यवेदयम् ।
मयि चाप्यागतेदैत्यश्चिन्तयामासचेतसि ॥ ४० ॥
नालब्धसंश्रयः शक्रो वक्तुमेतदिहार्हति ।
निमित्तानि च घोराणि सन्त्रासं जनयन्ति मे ॥ ४१ ॥
एवं विचिन्त्य चोत्थाय गवाक्षंसोऽध्यरोहत ।
सहस्रभौमिकावासश्रृङ्गवातायनस्थितः ॥ ४२ ॥
अपश्यद्देवसैन्यं स दिवं भूमिं च सम्वृतम् ।
रथैर्गजैर्हयैश्चापि नादिताश्च दिशो दश ॥ ४३ ॥
विमानैश्चाद्भुताकारैःविन्नरोद्गीतनादितैः ।
दुन्दुभिभिर्गोविषाणैस्तालैःशंखैश्चनादितैः ॥ ४४ ॥
अक्षोभ्यामिव तां सेनां दृष्ट्वा सोऽचिन्तयत्तदा ।
एते मया जिताः पूर्वं कस्माद्भूयः समागताः ॥ ४५ ॥

इति चिन्तापरो दैत्यः शुश्राव कटुकाक्षरम्। देवबन्दिभिरुद्घुष्टंघोरंहृदयदारुणम् जयाऽतुलशक्तिदीधितिपिञ्जररुचारुणमण्डलभुजोद्भासितदेवसैन्यपुरवदनकुमुद-कानन विकासनेन्दो कुमारनाथ जय दितिकुलमहोदधिवडवानल मधुररवमयूर-रवासुर मुकुटकूटकुट्टितचरणनखाङ्कुर महासेन तारकवंशशुष्कतृणदावानल-योगीश्वर योगिजन हृदयगगनविततचिन्तासन्तानसन्तमसनोदनखरकिरणकल्प-नखनिकरविराजितचरणकमलस्कन्दजयबालसप्तवासर भुवनावलिशोकसन्दहन!

नमो नमस्तेऽस्तु मनोरमाय नमोऽस्तु ते साधुभयापहाय ।
नमोऽस्तु ते बालकृताचलाय नमोनमो नाशय देवशत्रून् ॥ ४८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये कुमारस्य तारकासुरनगरं प्रति गमनवर्णनंनामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

# द्वात्रिंशोऽध्यायः

## नारदार्जुनसम्वादे कुमारेशमाहात्म्ये कुमारकृततारकवधवर्णनम्

नारद उवाच

श्रुत्वैतं संस्तवं दैत्यः संघुष्टं देवबन्दिभिः ।
सस्मार ब्रह्मणो वाक्यं बधं बालादुपस्थितम् ॥ १ ॥
श्रुत्वा स क्लिन्नसर्वाङ्गो द्वाःस्थं राजा वचोऽब्रवीत् ।
अमात्यान्द्रष्टुमिच्छामि शीघ्रमानय मा चिरम् ॥ २ ॥
ततस्ते राजवचनात्कालनेमिमुखागताः ।
प्राहः तांस्तारको दैत्यः किमिदं वो विचेष्टितम् ॥ ३ ॥
यैःशत्रुसंभवावार्ताकाऽपिनश्रावितस्त्वहम् ।
मदिराकाममत्तानांमन्त्रित्वंवोन युज्यते ॥ ४ ॥
हितं मन्त्रयते राज्ञस्तेन मन्त्री निगद्यते ॥

अमात्या उचुः

को जानाति सुरान्दीनान्दैत्यानामिति नो मतिः ॥ ५ ॥



मा विषीद महाराज ! वयंजेष्यामहेसुरान् ।
बालादपि भयंकिम्वालज्जायैचिन्तितंत्विदम् ॥ ६ ॥
सर्वमेतत्सुसाध्यं च भेरी सन्ताड्यतां दृढम् ।
ततो दैत्येन्द्रवचनात्संनाहजननी तदा ॥ ७ ॥
भृशं संताडिता भेरी कम्पयामास साजगत् ।
स्मरणाद्दैत्यराजस्यपर्वतेभ्योमहासुराः ॥ ८ ॥
निम्नगाभ्यः समुद्रेभ्यःपातालेभ्योऽम्बरादपि ।
सहसा समनुप्राता युगान्तानलसप्रभाः ॥ ९ ॥
कोटिकोटिसहस्रैस्तु परार्धैर्दशभिः शतैः ।
सेनापतिः कालनेमिः शीघ्रं देवानुपाययौ ॥ १० ॥
चतुर्योजनविस्तीर्णे नानाश्चर्यसमन्विते ।
रथे स्थितो मनाग्दीनस्तारकः समदृश्यत ॥ ११ ॥
एतस्मिन्नन्तरे पार्थ क्रुद्धैः स्कन्दस्य पार्षदैः ।
प्राकारःपातितः सर्वो भग्नान्युपवनानि च ॥ १२ ॥
ततश्चचाल वसुधा देवी सवनकानना ।
जज्वाल खं सनक्षत्रं प्रमूढं भुवनं भृशम् ॥ १३ ॥
तमोभूतं जगच्चाऽऽसीद्गृध्रैर्व्याप्तं नभोऽभवत् ।
ततो नानाप्रहरणं प्रलयाम्बुदसन्निभम् ॥ १४ ॥
कालनेमिमुखं पार्थ अदृश्यत महद्बलम् ।
तद्धिघोरमसंख्येयं जगर्ज विविधा गिरः ॥ १५ ॥
अभ्यद्रवद्रणे देवान्भगवन्तं च शङ्करम् ।
विनदद्भिस्ततो दैत्यैर्देवानीकं महायुधैः ॥ १६ ॥
पर्वतैश्च शतघ्नीभिरायसैः परिघैरपि ।
क्षणेन द्रावितं सर्वं विमुखं चाऽप्यदृश्यत ॥ १७ ॥

असुरैर्वध्यमाने तु पावकैरिव काननम्।
अपतद्द्रावभूमिष्ठं महाद्रुमवनं यथा ॥ १८ ॥
ते भिन्नास्थिशिरोदेहाः प्राद्रवन्त दिवौकसः।
न नाथमध्यगच्छन्तवध्यमानामहासुरैः ॥ १९ ॥
अथ तद्विद्रुतं सैन्यं दृष्ट्वा देवः पुरन्दरः।
आश्वासयन्नुवाचेदं बलवद्दानवार्दितम् ॥ २० ॥
भयंत्यजतभद्रंवःशूराःशस्त्राणिगृह्णत। कुरुध्वंविक्रमेबुद्धिमाचकाचिद्व्यथाऽस्तुवः
एष कालानलप्रख्यो मयूरं समुपस्थितः।
रक्षिता वो महासेनः कथं भीतिस्तथापि वः ॥ २२ ॥
शक्रस्य वचनं श्रुत्वा समाश्वस्ता दिवौकसः।
दानवान्प्रत्ययुध्यन्त शक्रं कृत्वा व्यपाश्रयम् ॥ २३ ॥
कालनेमिर्महेन्द्रेण संयुगे समयुज्यत। सहस्राक्षौहिणीयुक्तोजम्भकःशङ्करेण च ॥
कुजम्भो विष्णुना चैव तावत्यक्षौहिणीवृतः।
अन्ये च त्रिदशाः सर्वे मरुतश्च महाबलाः ॥ २५ ॥
प्रत्ययुध्यन्तदैत्येन्द्रैः साध्याश्च वसुभिः सह।
ततो बहुविधं युद्धं कालनेमिर्विधाय च ॥ २६ ॥
उत्सृज्य सहसा पार्थ ऐरावणशिरःस्थितः।
स तु पादप्रहारेण मुष्टिना चैव तं गजम् ॥ २७ ॥
शक्रं च जघ्ने विनदन्पेततुस्तावुभौ भुवि। ततःशक्रंसमादायकालनेमिर्विचेतसम्
रथमाश्रित्य भूयोऽपि तारकाभिमुखो ययौ।
अथ क्रुष्टं तदा देवैः सहसा चान्तकादिभिः ॥ २८ ॥
ह्रियते ह्रियते राजा त्राता कोऽपि न विद्यते।
एतस्मिन्नन्तरे शर्वः पिनाकधनुषश्च्युतैः ॥ ३० ॥
बाणैः ससैन्यं कृत्वा चजम्भकंगृध्रमोदनम्।



कालनेमिं समागम्य रथस्थो वाक्यमब्रवीत्। ३१ ॥
किमेतेन महेन्द्रेण मया युध्यस्व दानव!।
वीरंमन्य सुदुर्बुद्धे ततो ज्ञास्यसि वीरताम् ॥ ३२ ॥

कालनेमिरुवाच

नग्नेन सह को युद्धेद्धतेनाऽपि च येन वा।
शंसत्सु दैत्यवीराणामुपहासः प्रजायते ॥ ३३ ॥
आत्मतस्तु समं किञ्चिद्विलोकय सुदुर्मते!।
तदाकर्ण्य च सावज्ञं वचः शर्वो विसिष्मिये ॥ ३४ ॥
ततः कुमारः सहसा मयूरस्थोऽभ्यधावत।
कुजम्भं सानुगं हत्वा वासुदेवोऽप्यधावत ॥ ३५ ॥
ततो हरिः स्कन्दमाह किमेतेन तव प्रभो।
दैत्याधमेन पापेन मुहूर्तं पश्य मे बलम् ॥ ३६ ॥
एवमुक्त्वा निवार्यैनं केशवो गरुडस्थितः।
शार्ङ्गकोदण्डनिर्मुक्तैर्बाणैर्दैत्यमवाकिरत् ॥ ३७ ॥
स तैर्बाणैस्ताड्यमानो वज्रैरिव महासुरः।
विमुच्य वासवं क्रुद्धो बाणांस्तान्व्यधमच्छरैः ॥ ३८ ॥
यान्यान्बाणान्हरिर्दिव्यानस्त्राणि च मुमोचह।
निवारयति दैत्यस्तान्प्रहसँल्लीलयैव च ॥ ३९ ॥
ततः कौमोदकीं गृह्य क्षिप्रकारी जनार्दनः।
मुमोच सैन्यनाथाय सारथिं च व्यचूर्णयत् ॥ ४० ॥
ततो रथादवप्लुत्य विवृत्य वदनं महत्।
गरुडं चञ्चुनाऽऽदाय स विष्णुं क्षिप्तवान्मुखे ॥ ४१ ॥
ततोऽभूत्सर्वदेवानां विमोहोजगतामपि।
चचाल वसुधा चेलुः पर्वताः सप्तचाऽर्णवाः ॥ ४२ ॥

कालनेमिर्नदंश्चैव प्रानृत्यत महारणे ।
असंमूढस्ततो विष्णुस्त्वराकाल उपस्थिते ॥ ४३ ॥
कुक्षिं विदार्य चक्रेण भास्करोऽभादिवोदितः ।
बहिर्भूतो हरिश्चैनं मोहयित्वा स्वनिन्दया ॥ ४४ ॥
पातालस्य तलं निन्येतत्र शिश्ये सकाष्ठवत् ।
ततश्चक्रेण दैत्यानां निहतादशकोटयः ॥ ४५ ॥
प्रमोदितास्तथा देवाविमोहास्तत्क्षणाद्बभुः ।
ततः शर्वस्तमालिंग्यसाधुसाधु जनार्दन ॥ ४६ ॥
त्वया यद्विहितंकर्म तत्कर्ताऽन्यो न विद्यते ।
महिषाद्याःसुदुर्जया देव्या ये विनिपातिताः ॥ ४७ ॥
तेषामतिबलो ह्येष त्वया विष्णो!विनिर्जितः ।
तारकामयङ्ग्रामे वध्यस्तेऽसौ उनार्दन ॥ ४८ ॥
कंसरूपः पुनस्तेऽयं हन्तव्योऽष्टमजन्मनि ।
एवं प्रशंसमानास्ते वासुदेवं जगद्गुरुम्॥ ४९ ॥
शस्त्रजालैर्लब्धसंज्ञान्दैत्यसैन्याननाशयत् ।
तानि दैत्यशरीराणि जर्जराणि महायुधैः ॥ ५० ॥
अपतन्भूतले पार्थ च्छिन्नाभ्राणीव सर्वशः ।
ततस्तद्दानवं सैन्यं हतनाथमभूत्तदा ॥ ५१ ॥
देवैः स्कन्दानुगैश्चैव कृतं शास्त्रैः पराङ्मुखम् ।
अथो कृष्टं तदा हृष्टैः सर्वैर्देवैर्मुदायुतैः ॥ ५२ ॥
संहतानि च सर्वाणि तदा तूर्याण्यवादयन् ।
अथ भग्नं बलं प्रेक्ष्य हतवीरं महारणे ॥ ५३ ।
देवानां च महामोदं तारकः प्राह सारथिम् ।
सारथे पश्य सैन्यानि द्राव्यमाणानि मे सुरैः ॥ ५४ ॥



येऽस्माभिस्तृणवद्दृष्टाः पश्य कालस्य चित्रताम् ।
तन्मे वाहय शीघ्रं त्वं रथमेनं सुरान्प्रति ॥ ५५ ॥
पश्यन्तु मे बलं बाह्वोर्द्रवन्तु च सुराधमाः । ब्रुवन्नेवं सारथिं स विधुन्वन्सुमहद्धनुः
क्रोधरक्तेक्षणो राजा देवसैन्यं समाविशत् ।
आगच्छमानं तं दृष्ट्वा हरिः स्कन्दमथाऽब्रवीत् ॥ ५७ ॥
कुमारपश्य दैत्येन्द्रं कालंयद्वद्युगात्यये ।
अयं स येन तपसाघोरेणाऽऽराधितःशिवः ॥ ५८ ॥
अयं स येन शक्राद्याः कृता मर्काः समार्बुदम् ।
अयं स सर्वशस्त्रौघैर्योऽस्माभिर्न जितो रणे ॥ ५९ ॥
नावज्ञया प्रद्रष्टव्यस्तारकोऽयं महासुरः। सप्तमं हि दिनं तेऽद्य मध्याह्नोऽयं च वर्तते
अर्वागस्तमनादेनं जहि वध्योऽन्यथा नहि ।
एवमुक्त्वासशक्रादींस्त्वरितःकेशवोऽब्रवीत् ॥ ६१ ॥
आयासयत दैत्येन्द्रं सुखवध्यो यथा भवेत् ।
ततस्ते विष्णुवचनाच्छिनदन्तोदिवौकसः ॥ ६२ ॥
तमासाद्य शरव्रातैर्मुदिताः समवाकिरन् ।
प्रहसन्निव देवांस्तान्द्रावयामासतारकः ॥ ६३ ॥
यथा नास्तिकदुर्वृत्तो नानाशास्त्रोपदेशकान् ।
सोढुं शक्ता न ते वीरं महति स्यन्दने स्थितम् ॥ ६४ ॥
महापस्मारसङ्क्रान्तंयथैवाऽप्रियवादिनम् ।
विधूयसकलान्देवान्क्षणमात्रेण तारकः ॥ ६५ ॥
आजगाम कुमाराय विधुवन्समहाधनुः ।
आगच्छमानं तं दृष्ट्वा स्कन्दं प्रत्युद्ययौ ततः ॥ ६६ ॥
तस्यारक्षद्भवःपार्श्वं दक्षिणंचैव तं हरिः ।
पृष्ठे च पार्षदास्तस्यकोटिशोऽर्बुदशस्तथा ॥ ६७ ॥

ततस्तौ सुमहायुद्धे संसक्तौ देवदैत्ययोः। धर्माधर्माविवोदग्रौ जगदाश्चर्यकारकौ॥

ततः कुमारमासाद्य लीलया तारकोऽब्रवीत्।
अहो बालातिबालस्त्वं यत्त्वं गीर्वाणवाक्यतः॥ ६९ ॥
आसादयसि मां युद्धे पतङ्ग इव पावकम्।
वधेन तव को लाभो मम मुक्तोऽसि बालक ! ॥ ७० ॥
पिब क्षीरं गृहाणेमं कन्दुकं क्रीड लीलया।
एवमुक्तःप्रहस्याऽऽह तारकं योगिनांगुरुः ॥ ७१ ॥
शिशुत्वं माऽवमंस्था मे शिशुः कष्टो भुजङ्गमः।
दुष्प्रेक्ष्यो भास्करो बालो दुःस्पर्शोऽल्पोऽपि पावकः ॥ ७२ ॥
अल्पाक्षरो न मन्त्रः किं सस्फुरो दैत्य दृश्यते।
एवमुक्त्वा दैत्यमुक्तं गृहीत्वा कन्दुकं च तम् ॥ ७३ ॥
तस्मिञ्छक्त्यस्त्रमादाय दैत्याय प्रमुमोच ह।
तस्य तेन प्रहारेण रथश्चूर्णीकृतोऽभवत् ॥ ७४ ॥
चतुर्योजनमात्रो यो नानाश्चर्यसमन्वितः।
गरुडस्य सुता ये च शीर्यमाणे रथोत्तमे ॥ ७५ ॥
मुक्ताः कथञ्चिदुत्पत्य सागरान्तरमाविशन्।
ततः क्रुद्धस्तारकश्च मुद्गरं क्षिप्तवान्गुहे ॥ ७६ ॥
विन्ध्याद्रिमिव तं स्कन्दो गृहीत्वा तं व्यताडयत्।
स्थिरे तस्योरसि व्यूढे मुद्गरः शतधाऽगमत् ॥ ७७ ॥
मेने च दुर्जयं दैत्यस्तदा षड्वदनं रणे।
चिन्तयामास बुद्ध्या च प्राप्तंतद्ब्रह्मणोवचः ॥ ७८ ॥
तंभीतमिवचाऽऽलक्ष्यदैत्यवीराश्चकोटिशः।
नदन्तोऽतिमहासेनंनानाशस्त्रैरवाकिरन् ॥ ७९ ॥
क्रुद्धस्तेषु ततः स्कन्दः शक्तिं घोरामथाऽऽददे।



अभ्यस्यमाने शक्त्यस्त्रे स्कन्देनाऽमिततेजसा ॥ ८० ॥
उल्काजालं महाघोरं पपात वसुधातले।
चाल्यमाना तथा शक्तिः सुघोरा भवसूनुना ॥ ८१ ॥
ततःकोट्योविनिष्पेतुःशक्तीनांभरतर्षभ!।
स शक्त्यस्त्रेणबलवान्करस्थेनाऽहनत्प्रभुः ॥ ८२ ॥
अष्टौ पद्मानि दैत्यानां दशकोटिशतानि च।
तथा नियुतसाहस्रं वाहनं कोटिरेवच ॥ ८३ ॥

हृदोदरं च दैत्येन्द्रं निखर्वैर्दशभिर्वृतम्। तत्राऽकुर्वन्सुतुमुलं नादं वध्येषु शत्रुषु॥

कुमारानुचराः पार्थ ! पूरयन्तो दिशो दश।
शक्त्यस्त्रस्यार्चिः सम्भूतशक्तिभिः केऽपि सूदिताः ॥ ८५ ॥
पताकयाऽवधूताश्चहताःकेचित्सहस्रशः।
केचिद्घण्टारवत्रस्ताश्छिन्नभिन्नहृदोऽपतन् ॥ ८६ ॥
केचिन्मयूरपक्षाभ्यां चरणाभ्यां च सूदिताः।
कोटिशस्ताम्रचूडेनविदार्यैव च भक्षिताः ॥ ८७ ॥
पार्षदैर्मातृभिः सार्धं पद्मशो निहताः परे।
एवं निहन्यमानेषु दानवेषु गुहादिभिः ॥ ८८ ॥
अभाग्यैरिवलोकेषु तारकःस्कन्दमाययौ।
जग्राह च गदां दिव्यां लक्षघण्टादुरासदाम् ॥ ८९ ॥
तथा मयूरमाजघ्ने मयूरो विमुखोऽभवत्।
दृष्ट्वा पराङ्मुखं स्कन्दं वासुदेवोऽब्रवीत्त्वरन् ॥ ९० ॥

देवसेनापते ! शीघ्रं शक्तिं मुञ्च महासुरे। प्रतिज्ञामात्मनःपाहिलम्बतेरविमण्डलम्॥

स्कन्द उवाच

त्वयैव रुद्रभक्तोऽयं जनार्दन! ममेरितम्।वधार्थं रुद्रभक्तस्य बाहुः शक्तिं न मुञ्चति॥
नारुद्रः पूजयेद्रुद्रं भक्तरूपस्य यो हरः। रुद्ररूपममुं हत्वा कीदृशं जन्मनो भवेत्॥

तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ताः प्रपीडिताः।
रुद्रभक्ताः कुलं सर्वं निर्दहन्तिहताः किमु ॥ ६४ ॥
एष चेद्धन्ति तद्रुद्रं हन्यतामेष मां रणे।
रुद्रभक्ते पुनर्विष्णो ! नाऽहं शस्त्रमुपाददे ॥ ६५ ॥

श्रीभगवानुवाच

नैनत्तवोचितं स्कन्द ! रुद्रभक्तो यथा शृणु।
द्वे तनू गिरिजाभर्तुर्वेदज्ञा मुनयो विदुः ॥ ६६ ॥
एका जीवात्मिका तत्र प्रत्यक्षा च तथापरा।
द्रोग्धा भूतेषु भक्तश्च रुद्रभक्तो न स स्मृतः ॥ ६७ ॥
भक्तो रुद्रे कृपावांश्च जन्तुष्वेव हरव्रतः।
तदेनं भूतमर्त्येषु द्रोग्धारं त्वं पिनाकिनः ॥ ६८ ॥
जहि नैवाऽत्र पश्यामि दोषं कञ्चन ते प्रभो।
श्रुत्वेतिवाचं गोविन्दात्सत्यार्थामपि भारत ॥ ६६ ॥
हन्तुं न कुरुते बुद्धिं रुद्रभक्त इति स्मरन्।
तारकस्तु ततः क्रुद्धो ययौ वेगेन केशवम् ॥ १०० ॥
प्राह चैवं सुदुर्बुद्धेहन्मि त्वां पश्यमेबलम्।देवानां चापिधर्माणांमूलंमतिमतां तथा
हत्वा त्वामद्य सर्वांस्तांश्छेत्स्ये पश्याऽद्य मे बलम् ॥१०१॥

विष्णुरुवाच

दैत्येन्द्र ! तव चाऽऽस्माभिः किमहो शृणु सत्यताम् ॥ १०२ ॥
रथे य एष शर्वोऽयं हतेऽस्मिन्सकलं हतम्।
श्रुत्वेति तारकः क्रुद्धस्तूर्णं रुद्ररथं ययौ ॥ १०३ ॥
अभिसृत्य स जग्राह रुद्रस्य रथकूबरम्।
यदा स कूबरं क्रुद्धस्तारकः सहसाऽग्रहीत् ॥ १०४ ॥
रेजतू रोदसी तूर्णं मुमुहुश्च महर्षयः।



व्यनदंश्च महाकाया दैत्या जलधरोपमाः ॥ १०५ ॥
आसीच्च निश्चितं तेषां जितमस्माभिरित्युत।
तारकस्याऽप्यभिप्रायं भगवान्वीक्ष्य शङ्करः ॥ १०६ ॥
उमया सह सन्त्यत्तवा रथं वृषभमावहत्।
ओमित्यथ जपन्ब्रह्माआकाशंसहसाश्रितः ॥ १०७ ॥
ततस्तं शतसिंहं च रथं रुद्रेणनिर्मितम्।
उत्क्षिप्य पृथ्व्यामास्फोत्स्यचूर्णयामास तारकः॥ १०८ ॥
शूलपाशुपतादीनि;सहसोपस्थितानि च।
वारयामासगिरिशो भवःसाध्य इति ब्रुवन् ॥ १०६ ॥
ततः स्ववञ्चितं ज्ञात्वा रुद्रेणाऽऽत्मानमीर्ष्यया।
विनदन्सहसाऽधावद्वृषभस्थं महेश्वरम् ॥ ११० ॥
ततो जनार्दनोऽधावच्चक्रमुद्यम्य वेगतः।
वज्रमिन्द्रस्तथोद्यम्य दण्डंचापि यमो नदन् ॥ १११ ॥
गदां धनेश्वरः क्रुद्धः पाशं च वरुणोनदन्।
वायुर्महाङ्कुशं घोरं शक्तिं वह्निर्महाप्रभाम् ॥ ११२ ॥
निर्ऋतिर्निशितंखड्गंरुद्राःशूलानि कोपिताः।
धनूंषि साध्यादेवाश्चपरिघान्वसवस्तथा ॥ ११३ ॥
विश्वेदेवाश्चमुसलंचन्द्रार्कौ स्वप्रभामपि।
ओषधीश्चाश्विनौदेवौ नागाश्चज्वलितंविषम् ॥ ११४ ॥
हिमाद्रिप्रमुखाश्चाऽपि समुद्यम्य महीधरान्।
भृशमुन्नदतोदेवान्धावतो वीक्ष्य तारकाः ॥ ११५ ॥
निवृत्तः सहसा पार्थ महागज इवोन्नदन्।
स वज्रमुष्टिनाहत्य भुजे शक्रमपातयत् ॥ ११६ ॥
दण्डं यमादुपादाय मूर्ध्न्याहत्य न्यपातयत्।

उरसाहत्यसगदं धनदं भुव्यपातयत् ॥ ॥ ११७ ॥
वरुणात्पाशमादाय तेन बद्ध्वा न्यपातयत् ।
महाङ्कुशेन वायुश्च चिरं मूर्ध्नि जघान सः ॥ ११८ ॥
फूत्कारैरुद्धतं वह्निं शमयामास तारकः ।
निर्ऋतिं खड्गमादाय हत्वा तेन न्यपातयत् ॥ ११९ ॥
शूलैरेव तथा रुद्राःसाध्याश्च धनुषार्दिताः। परिघैरेव वसवो मुशलैरेव विश्वकाः ॥
रेणुनाऽऽच्छा चन्द्राकौ वल्मीकस्थाविवेक्षितौ ।
महोग्राश्चौषधीस्तालैरभिभ्यां सोऽभ्यवर्तयत् ॥१२१ ॥
सविषाश्च कृता नागा निर्विषाःपादकुट्टनैः ।
पार्वताः पर्वतैरेवनिरुच्छ्वासाभृशंकृताः ॥ १२२ ॥
एवं तद्देवसैन्यं च हाहाभूतमचेतनम् ।
कृत्वा मुहूर्तादाधावच्चक्रपाणिं तमुन्नदन् ॥ १२३ ॥
ततश्चाऽन्तर्दधे सद्यः प्रहसन्निव केशवः ।
कुयोगिन इव स्वामी सदा बुद्धिमताम्वरः ॥ १२४ ॥
अपश्यंस्तारको विष्णुं पुनर्वृषभवाहनम् ।
अधावत्कुपितो दैत्यो मुष्टिमुद्यम्य वेगतः ॥ १२५ ॥
अचिरांशुरिवाऽलक्ष्योलक्ष्योऽथ भगवान्हरिः ।
आबभाषे ततो देवान्बाहुमुद्यम्य चोच्चकैः ॥ १२६ ॥
पलायध्वमहो देवाः शक्तिश्चेद्वः पलायितुम् ।
विमूढा हि वयं सर्वे ये बालवचसा गताः ॥ १२७ ॥
किं न श्रुतः पुरा गीतः श्लोकः स्वायम्भुवेन यः ।
यथा बालेषु निक्षिप्ताः स्त्रीषु पण्डितकेषु च ।
अपस्मारिषु चैवाऽपि सर्वे ते संशयं गताः ॥ १२८ ॥
प्रत्यक्षं तदिदं सर्वमधुना चात्र दृश्यते ॥ १२९ ॥



अज्ञासिष्म पुरैवैतद्रुद्रभक्तं न हन्त्यसौ ।
यत्प्रतिज्ञां नाऽकरिष्यन्नस्यान्नः कदनं महत् ॥ १३० ॥
अथैष यदि दैत्येन्द्रं न निहन्ति कुबुद्धिमान् ।
मा भयंवोमहाभागा निहनिष्यामि वो रिपून् ॥ १३१ ॥
अद्य मे विपुलं बाह्वोर्बलं पश्यत देवताः ।
दैत्याधमं नाशयामि मुष्टिनैकेन पश्यत ॥ १३२ ॥
मया हि दक्षिणो बाहुर्दत्तश्च भवतां सदा ।
रिपून्वा निहनिष्यामि सत्यं तत्परिपालये ॥ १३३ ॥
येऽम्बरे ये च पाताले भुवियेच महासुराः।
क्षणात्तान्नाशयिष्यामि महावातो घनानिव ॥ १३४ ॥
एवमुक्त्वा जगन्नाथोमुष्टिमुद्यम्यदक्षिणम् ।
निरायुधस्तार्क्ष्यपृष्ठादवप्लुत्याऽभ्यधावत ॥ १३५
तस्मिन्धावति गोविन्दे चचाल भुवनत्रयम् ।
विमूर्च्छितमभूद्विश्वं देवाभीतिं परांययुः ॥ १३६ ॥
धावतश्चाऽपि कल्पान्तं रुद्रकल्पस्य तस्य याः ।
मुखात्समुद्ययुर्ज्वालास्ताभिः खर्वशतं हतम् ॥ १३७ ॥
ततोऽन्तरिक्षे वाचश्च प्रोचुःसिद्धाःस्वयंतदा ।
जहि कोपं वासुदेव ! त्वयि क्रुद्धे क्व वै जगत् ॥ १३८ ॥
अनादृत्येव तद्वाक्यं ब्रुवन्नान्यत्करोम्यहम् ।
आह्वयंश्च महादैत्यं क्रुद्धो हरिरधावत ॥ १३९ ॥
उवाच वाचं साधूंश्च यत्नात्पालयतां फलम् ।
दुष्टान्विनिघ्नतांचैवतत्फलं मम जायताम् ॥ १४० ॥
अथापश्यन्महासेनो रुद्रं यान्तं च तारकम् ।
तारकं चान्वधावन्तं पुराणपुरुषं हरिम् ॥ १४१ ॥

जगच्च क्षुब्धमत्यर्थं स्वां प्रतिज्ञां पुरा कृताम् ।
पश्चिमां प्रतिलम्बन्तं भास्करं चापि लोहितम् ॥ १४२ ॥
आकाशवाणीं शृण्वंश्च किं स्कन्द!त्वं विषीदसि ।
पश्चात्तापो यदि भवेत्कृत्वा ब्रह्मवधंत्वयि ॥ १४३ ॥
स्थापयेल्लिङ्गमीशस्य मोक्षोहत्याशतैरपि ।
आविवेश महाक्रोधं दिधक्षुरिव मेदिनीम् ॥ १४४ ॥
अथोत्प्लुत्य मयूरात्स प्रहसन्निव केशवम् ।
बाहुभ्यामप्युपादाय प्रोवाच भवनन्दनः ॥ १४५ ॥
जानामि त्वामहं विष्णोमहाबुद्धिपराक्रमम् ।
भूतभव्यभविष्यांश्च दैत्यान्हंस्यपिहुंकृतैः ॥ १४६ ॥
त्वमेव हन्ता दैत्यानांदेवानां परिपालकः ।
धर्मसंस्थापकश्च त्वमेष ते रचितोऽञ्जलिः ॥ १४७ ॥
क्षणार्धं पश्य मे वीर्यं भास्करो लोहितायते ।
एवं प्रणम्य स्कन्देन वासुदेवः प्रसादितः॥ १४८ ॥
विरोषोऽभूत्तमालिङ्ग्य वचनं केशवोऽब्रवीत् ।
सनाथस्त्वद्य धर्मोऽयं सुराश्चैव त्वया गुह॥ १४९ ॥
स्मरात्मानं यदर्थं त्वमुत्पन्नोऽसि महेश्वरात् ।
साधूनां पालनार्थाय दुष्टसंहरणाय च
सुरविप्रकृते जन्म जीवितं च महात्मनाम् ॥ १५० ॥
रुद्रस्य देव्या गङ्गायाः कृत्तिकानां च तेजसा ।
स्वाहा वह्नेश्च जातस्त्वं तत्तेजःसफलीकुरु ।
साधूनां च कृते यस्य धनं वीर्यं च सम्पदः ॥ १५१ ॥
सफलं तस्य तत्सर्वं नान्यथा रुद्रनन्दन ! ॥ १५२ ॥
अद्य धर्मश्चदेवाश्च गावः साध्याश्च ब्राह्मणाः ।



नन्दन्तु तव वीर्येण प्रदर्शय निजं बलम् ॥ १५३ ॥

स्कन्द उवाच

या गतिः शिवत्यागेन त्वत्यागेन च केशव ! ।
तां गतिं प्राप्नुयां क्षिप्रं हन्मि चेन्नहि तारकम् ॥ १५४ ॥
या गतिः श्रुतित्यागेन साध्वीभार्यातिपीडनात् ।
साधूनां च परित्यागद्वृथा जीवितसाधनात् ॥
निष्ठुरस्य गतिर्या च तां गतिं यामि केशव ! ॥ १५५ ॥
इत्युक्ते सुमहान्नादः सम्प्रजज्ञे दिवौकसाम् ।
प्रशशंसुर्गुहं केचित्केचिन्नारायणं प्रभुम् ॥ १५६ ॥
ततस्तार्क्ष्यं समारुह्य हरिस्तस्मिन्महारणे ।
ताम्रचूडं महासेनस्तारकं चाप्यधावताम् ॥ १५७ ॥
लोहिताम्बरसम्वीतो लोहितस्रग्विभूषणः ।
लोहिताक्षो महाबाहुर्हिरण्यकवचः प्रभुः ॥ १५८ ॥
भुजेन तोलयञ्छक्तिं सर्वभूतानि कम्पयन् ।
प्राप्य तं तारकंप्राहमहासेनो हसन्निव॥ ॥ १५९ ॥
तिष्ठतिष्ठ सुदुर्बुद्धे! जीवितन्तेमयि स्थितम् ।
सुहृष्टः क्रियतांलोकोदुर्लभःसर्वसिद्धिदः ॥ १६० ॥
यत्ते सुनिष्ठुरत्वं च धर्मदेवेषु गोषु च ।
तस्य ते प्रहमराम्यद्य स्मर शस्त्रं सुशिक्षितम् ॥ १६१ ॥
एवमुक्ते गुहेनाऽथनिवृत्तस्याऽस्यभारत ! ।
तारकस्य शिरोदेशात्काऽपि नारींविनिर्ययौ ॥ १६२ ॥
तेजसा भासयन्ती तमधऊर्ध्वंदिशोदश ।
दृष्ट्वा नारींगुहःप्राह काऽसिकस्माच्च निर्गता ॥ १६३ ॥

नार्युवाच

अहंशक्तिर्गुहाख्याता भूतलेषुसदास्थिता ।अनेन दैत्यराजेन महता तपसार्जिता॥
सुरेषु सर्वेषु वसामि चाऽहं विप्रेषु शास्त्रार्थरतेषु चाऽहम् ।
साध्वीषु नारीषु तथा वसामि बिना गुणान्नाऽस्मि वसामि कुत्रचित्॥
तदस्यपुण्यसंवस्य सम्प्राप्तोऽद्यावधिर्गुह!।
तदेनं त्यज्ययास्यामि जह्येनं विश्वहेतवे ॥ १६६ ॥
तस्यां ततो निर्गतायां दैत्यशीर्षं व्यकम्पयत् ।
कम्पितं चाऽस्यतद्देहं गतवीर्योऽभवत्तत्क्षणात् ॥ १६७ ॥
एतस्मिन्नन्तरे शक्तिं सोऽक्षिपद्गिरिजात्मजः ।
उल्काज्वालाविमुञ्चन्तीमतिसूर्याग्निसप्रभाम् ॥ १६८ ॥
कल्पाम्भोधिसमुन्नादां दिधक्षन्तीं जगद्यथा ।
तारकस्यान्तकालाय अभाग्यस्य दशामिव ॥ १६६ ॥
दारणीं पर्वतानाञ्च सर्वसत्त्वबलाधिकाम् ।
उत्क्षिप्य तां विनद्योच्चैरमुञ्चत्कुपितोगुहः॥ १७० ॥
धर्मश्चेद्वलवाँल्लोके धर्मो जयति चेत्सदा ।
तेन सत्येन दैत्योऽयं प्रलयं यात्वितीरयन् ॥ १७१ ॥
सा कुमारभुजोत्सृष्टा दुर्निवार्या दुरासदा ।
बिभेद हृदयं चाऽस्य भित्त्वा च धरणिं गता ॥ १७२ ॥
निःसृत्य जलकल्लोलपूर्विकास्कन्दमाययौ ।
स च सन्ताडितःशक्त्याविभिन्नहृदयोऽसुरः
नादयन्वसुधां सर्वां पपाताऽधोमुखो मृतः ॥ १७३ ॥
एवं प्रताप्य त्रैलोक्यं निर्जित्य बहुशः सुरान् ।
महारणे कुमारेण निहितः पार्थ तारकः
एतस्मिन्निहते दैत्ये प्रहर्षं विश्वमाययौ ॥ १७५ ॥



ववुर्वातास्तथापुण्याः सुप्रभोऽभूद्दिवाकरः ।
जज्वलुश्चाऽग्नयःशान्ताः शान्तदिग्जनितस्वनाः ॥ १७६ ॥
ततः पुनः स्कन्दमाह प्रहृष्टःकेशवोऽरिहा ।
स्कन्दस्कन्दमहाबाहोबाणोनामबलात्मजः ॥ १७७ ॥
क्रौञ्चपर्वतमादाय देवसङ्घान्प्रबाधते। सोऽधुना ते भयाद्वीर पलायित्वा नगं गतः॥
जहि तं पापसङ्कल्पं क्रौञ्चस्थं शक्तिवेगतः ॥ १७८ ॥
ततः क्रौञ्चं महातेजा नानाव्यालविनादितम् ।
शक्त्या बिभेद बहुभिर्वृक्षैर्जीवैश्च सङ्कुलम् ॥ १७६ ॥
तत्र व्यालसहस्राणि दैत्यकोट्ययुतं तथा ।
ददाह बाणं च गिरिं भित्त्वा शक्तिर्महारवा ॥ १८० ॥
अद्याऽपि छिद्रं तत्पार्थ ! क्रौञ्चस्य परिवर्तते ॥ १८१ ॥
येन हंसाश्च क्रौञ्चाश्च मानसाय प्रयान्ति च ।
हत्वा बाणं महाशक्तिःपुनःस्कन्दंसमागता
प्रत्यायाति मनः साधोराहूतं प्रहितं तथा ॥ १८२ ॥
ततो हरीन्द्रप्रमुखा प्रतुष्टुवुर्ननृतुश्च रम्भाप्रमुखा वराङ्गनाः ।
वाद्यानि सर्वाणि च वादयन्तस्तंसाधुसाध्वित्यमरा जगुर्भृशम् ॥१८३॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेशमाहात्म्ये कुमारकृततारकवधवर्णनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

———

# त्रयस्त्रिंशोऽध्यायः

**रुद्रस्यांशस्तारकइतितारकवधखेदखिन्नो गुहःप्रायश्चित्तं कर्तुमुद्युक्तस्तत्पाप प्रशमनायाऽपृच्छद्विष्णुकृतं कार्त्तिकेयकृतसान्त्वनं प्रतिज्ञेश्वर-शक्तिच्छिद्रेश्वरज्योतिर्लिङ्गयोःप्रतिष्ठावर्णनम्**

नारद उवाच

ततस्तं गिरिवर्ष्माणं पतितं वसुधोपरि। अलिङ्गितमिवपृथ्व्या गुणिन्या गुणिनं यथा
दृष्ट्वा देवा विस्मितास्ते जयंजगुस्तथामुहुः।
केचित्समीपमागन्तुं बिभ्यति त्रिदिवौकसः ॥ २ ॥
उत्थाय तारको दैत्यः कदाचिन्नो निहन्तिचेत् ।
तं तथापतितं दृष्ट्वा वसुधामण्डलेगुहः ॥ ३ ॥
आसीद्दीनमनाः पार्थ शुशोच च महामतिः।
स्तवनं चापिदेवानां वारयित्वावचोऽब्रवीत् ॥ ४ ॥
शोच्यं पातकिनं मां च संस्तुवध्वं कथं सुराः।
पञ्चानामपियोभर्ताप्राकृतोऽसौन कीर्त्यते ॥ ५ ॥
स तु रुद्रांशजःप्रोक्तस्तस्य द्रुह्यन्न रुद्रवत्।
स्वायम्भुवेन गीतश्च श्लोकः संश्रूयते तथा ॥ ६ ॥
वीरं हि पुरुषं हत्वा गोसहस्रेण मुच्यते। यथाकथञ्चित्पुरुषो न हन्तव्यस्ततो बुधैः
पापशीलस्य हनने दोषो यद्यपिनास्ति च।
तथापि रुद्रभक्तोऽयं संस्मरन्नितिशोचिमि ॥ ८ ॥
तदहं श्रोतुमिच्छामि प्रायश्चित्तं न किञ्चन।



प्रायश्चित्तैरपैत्येनो यतोऽपि महदर्जितम् ॥ ९ ॥
इति संशोचतस्तस्य शिवपुत्रस्य धीमतः।
वासुदेवोगुरुः पुंसांदेवमध्ये वचोऽब्रवीत् ॥ १० ॥
श्रुतिःस्मृतिश्चेतिहासाःपुराणं च शिवात्मजः।
प्रमाणं चेत्ततो दुष्टवधे दोषो न विद्यते ॥ ११ ॥
स्वप्राणान्यः परप्राणैः प्रपुष्णात्यघृणः पुमान्।
तद्वधस्तस्य हि श्रेयो यद्दोषाद्यात्यधः पुमान ॥ १२ ॥
अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्याऽपचारिणी।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् ॥ १३ ॥
पापिनं पुरुषं यो हि समर्थो न निहन्ति च।
तस्य तावन्ति पापानि तदर्धं सोऽप्यवाश्नुते ॥ १४ ॥
पापिनो यदि वध्यन्ते नैव पालनसंस्थितैः।
ततोऽयमक्षमो लोकः कं याति शरणं गुह ॥ १५ ॥
कथं यज्ञाश्च वेदाश्च वर्तन्ते विश्वधारकाः।
तस्मात्त्वया पुण्यमाप्तं न च पापं कथञ्चन ॥ १६ ॥
अथ चेद्रुद्रभक्तेषु बहुमानस्तव प्रभो।
तत्र ते कीर्तयिष्यामि प्रायश्चित्तंमहोत्तमम् ॥ १७ ॥
आजन्म सम्भवैः पापैः पुमान्येन विमुच्यते।
आकल्पान्तं च वा येन रुद्रलोके प्रमोदते ॥ १८ ॥
कृते पापेऽनुतापो वै यस्य स्कन्द ! प्रजायते।
रुद्राराधनतोऽन्यच्च प्रायश्चित्तं परं न हि ॥ १९ ॥
न यस्याऽलमपि ब्रह्मा महिमानं विवर्णितुम्।
श्रुतिश्च भीता यं वक्ति किं तस्मात्परमं भवेत् ॥ २० ॥
अकाण्डे यच्च ब्रह्माण्डक्षयोद्युक्तं हलाहलम्।

कण्ठे दधार श्रीकण्ठःकस्तस्मात्परमोभवेत् ॥ २१ ॥
दुःखताण्डवदीनोऽभूदण्डसङ्कीर्णमानसः ।
मारमारश्च यो देवः कस्तस्मात्परमोभवेत् ॥ २२ ॥
वियद्व्यापी सुरसरित्प्रवाहोविप्रुषाकृतिः ।
बभूव यस्यशिरसिकस्तस्मात्परमो भवेत् ॥ २३ ॥
यज्ञादिकाश्च ये धर्मा विना यस्याऽर्चनं वृथा ।
दक्षोऽत्र सत्यदृष्टान्तः कस्तस्मात्परमो भवेत् ॥ २४ ॥
क्षोणी रथो विधिर्यन्ता शरोऽहं मन्दरो धनुः ।
रथाङ्गे चापिचन्द्रार्कौ युद्धे यस्य च त्रैपुरे ॥ २५ ॥
आराधनं तस्यकेचिद्योगमार्गेण कुर्वते ।
दुःखसाध्यं हि तत्तेषां नित्यं शून्यमुपासताम् ॥ २६ ॥
तस्मात्तस्यार्चयेल्लिङ्गंभुक्तिमुक्ती य इच्छति ।
सृष्ट्यादौ लिङ्गरूपी सविवादोममब्रह्मणः ॥ २७ ॥
अभूद्यस्य परिच्छेदे नालमावां बभूविव ।
चराचरं जगत्सर्वं यतो लीनं सदाऽत्र च ॥ २८ ॥
तस्माल्लिङ्गमिति प्रोक्तं देवै रुद्रस्यधीमतः ।
तोयेन स्नापयेल्लिङ्गं श्रद्धया शुचिना च यः ॥ २९ ॥
ब्रह्मादितृणपर्यन्तं तेनेदं तर्पितं जगत् ।
पञ्चामृतेन तल्लिंगं स्नापयेद्यश्च बुद्धिमान् ॥ ३० ॥
तर्पितं तेन विश्वंस्यात्सुधया पितृभिःसमम् ।
पुष्पैरभ्यर्चयेल्लिङ्गंयथाकालोद्भवैश्च यः ॥ ३१ ॥
तेन सम्पूजितं विश्वं सकलं नात्र संशयः ।
नैवेद्यं तत्र यो दद्याल्लिङ्गस्याग्रे विचक्षणः ॥ ३२ ॥
भोजितं तेन विश्वं स्याल्लिङ्गस्यैवंफलंमहत् ।



किमत्र बहुनोक्तेन स्वल्पं वा यदि वा बहु ॥ ३३ ॥
लिङ्गस्य क्रियते यच्च तत्सर्वंविश्वप्रीतिदम् ।
तच्च लिङ्गं स्थापयेद्यःशुचौ देशे सुभक्तितः ॥ ३४ ॥
स सर्वपापनिर्मुक्तो रुद्रलोके प्रमोदते ।
यन्नित्यं यजतो यज्ञैः फलमाहुर्मनीषिणः ॥ ३५ ॥
तच्च स्थापयतो लिङ्गं शिवस्य शुभलक्षणम् ।
यथाग्निःसर्वदेवानां मुखं स्कन्द! प्रकीर्त्यते ॥ ३६ ॥
तथैव सर्वजगतां मुखं लिङ्गं न संशयः ।
प्रारम्भान्मुच्यते पापैः सर्वजन्मकृतैरपि ॥ ३७ ॥
अतीतं च तथाऽऽगामि कुलानां तारयेच्छतम् ।
मृण्मयं काष्ठनिष्पन्नं पक्वेष्टं शैलमेवच ॥ ३८ ॥
कृतमायतनं दद्यात्क्रमाच्छतगुणं फलम् ।
कलशं तत्र चारोप्य एकविंशत्कुलैर्युतः ॥ ३९ ॥
आकल्पान्तं रुद्रलोके मोदते रुद्रवत्सुखी ।
एवंविधफलं लिङ्गमतोभूयोऽप्यधो न हि ॥ ४० ॥
तस्मादत्र महासेन ! लिङ्गं स्थापितुमर्हसि ।
यदुक्तमेतदश्लीलं यदि किञ्चन चाऽत्र चेत् ॥ ४१ ॥
तद्ब्रवीतु महासेन! स्वयं साक्षी महेश्वरः ।
एवं वदति गोविन्दे साधुवादो महानभूत् ॥ ४२ ॥
महादेवो ह्यथालिङ्ग्य स्कन्दं वचनमब्रवीत् ।
यद्भवान्मम भक्तेषु प्रकरोति कृपां पराम् ॥ ४३ ॥
तेनाऽपि परमा प्रीतिर्मम जाता तवोपरि ।
किन्तु यद्भगवानाह वासुदेवो जगद्गुरुः ॥ ४४ ॥
तत्तथा नान्यथा किञ्चदत्र प्रोक्तं हि विष्णुना ।

यो ह्यहं स हरिर्ज्ञेयो यो हरिः सोऽहमित्युत ॥ ४५ ॥
नावयोरन्तरं किञ्चिद्दीपयोरिव सुव्रत ! एनं द्वेष्टि स मां द्वेष्टि योऽन्वेत्येनंसमाऽनुग
इति स्कन्द ! विजानाति स मद्भक्तोऽन्यथा न हि ॥ ४७ ॥

स्कन्द उवाच

एवमेवाऽस्मि जानामि त्वां च विष्णुं च शङ्कर ! ॥ ४८ ॥
यच्च लिङ्गकृते प्राह हरिर्मां धर्मवत्सलः ।
खे वाणी तारकवधे एवमेव पुराऽऽह माम्
लिङ्गं संस्थापयिष्यामि सर्वपापापहं ततः ।
एकं यत्र प्रतिज्ञा मे गृहीताऽस्यवधायच ।
द्वितीयं यत्र निःसत्त्वस्त्यक्तः शत्तयाऽसुरोऽभवत् ।
तृतीयं निहतो हत्यापापोपशान्तिदम् ॥५१॥
इत्युक्त्वाविश्वकर्माणमाहूय प्राह पावकिः ।
त्रीणि लिङ्गानि शुद्धानि शीघ्रं त्वं कर्तुमर्हसि ।
वचनाद्बाहुलेयस्य निर्ममे देववर्द्धकिः ।
त्रीणि लिङ्गानि शुद्धानि न्यवेदयति तानि च ।
ततो ब्रह्मादिभिः सार्धं विष्णुना शङ्करेण च ।
पूर्वंसंस्थापयामास पश्चिमायामदूरतः ।
प्रतिज्ञेश्वरमित्येव लिङ्गं परमशोभनम् ।
अष्टम्यां बहुले चात्र चैत्रे स्नात्वा उपोष्य च ।
पूजां च जागरं कृत्वा मुच्येत्पारुष्यपापतः ।
इत्याहस्कन्दप्रीत्यर्थं स्वयं तत्र महेश्वरः ।
ततो द्वितीयं लिङ्गं तु वह्निकोणाश्रितं तथा ।
स्थापयामाससरसो यत्र शक्तिर्विनिर्ययौ ।
कपालेश्वरमित्येव लिङ्गं पापापहं शुभम् ।



शक्तिं च तामभिष्टूय स्नापयामास तत्र च ।
कपालेश्वरसानिध्यं देवीं कापालिकेश्वरीम् ।
तत्र चोत्तरदिग्भागे शक्तिच्छिद्रं प्रचक्षते ॥
पातालगङ्गा यत्राऽस्ति सर्वपापहरा शिवा ।
तत्र स्नात्वा ददौ स्कन्दः कृपयाऽभिपरिप्लुतः ॥६०॥
तदा तोयं तारकाय सहितः सर्वदैवतैः ॥६१॥
काश्यपेयाय वज्राङ्गतनयाय महात्मने । रुद्रभक्ताय सतिलमक्षय्योदकमस्त्विति ॥
ततो महेश्वरः प्रीतः प्राह स्कन्दस्य शृण्वतः ।
चतुर्दश्यां कृष्णपक्षे मधौ चैवाऽत्र यो नरः ।
स्नात्वोपोष्य समभ्यर्च्य कपालेश्वरमीश्वरीम् ॥६३॥
तेजोवधसमुद्भूतपातकेन स मुच्यते ॥६४॥
अस्यामेव तिथौ सोमः त्रिशयोगश्चतैतिलम् ।
षड्योगः शक्तिच्छिद्रे यो दिनं रुद्रं जपन्निशि ।
स्नात्वाऽत्र सशरीरो वै रुद्रलोकं व्रजिष्यति ॥६५॥
कपालेशस्यसान्निध्येशक्तिच्छिद्रं हि कीर्त्यते ।
तस्य तुल्यं परं तीर्थं पृथिव्यां नैव विद्यते ।
इति श्रुत्वा रुद्रवाक्यं स्कन्दः प्रीतोऽभवद्भृशम् ॥६६॥
देवाश्च मुदिताः सर्वे साधुसाध्विति ते जगुः ॥६७॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे
कौमारिकाखण्डे कुमारस्थापितप्रतिज्ञेश्वरशक्तिच्छिद्रेश्वर-
माहात्म्यवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥३३॥

---

# चतुस्त्रिंशोऽध्यायः

## शिवमंदिरप्रतिष्ठापुण्येनसहकुमारेशस्थापनवर्णनंमाहात्म्यञ्च

### नारद उवाच

ततस्तृतीयलिङ्गस्य चिकीर्षुं स्थापनं गुहम् ।
ब्रह्मा प्राहास्य प्रीत्यर्थंस्वयमन्यं प्रकुर्महे ॥ १ ॥
यद्यप्येतच्छुभं लिङ्गं सर्वदोषविवर्जितम् ।
तथाप्यन्यत्करिष्येऽहं सर्वश्रेष्ठतमं हि यत् ॥ २ ॥
ततो ब्रह्मा सर्वदोषविमुक्तं निर्ममे स्वयम् ।
दृष्टिकान्तं मनःकान्तं फलकान्तं सुलिङ्गकम् ॥ ३ ॥
तत्र स्कन्दस्य प्रीत्यर्थं सर्वदेवैर्विनिर्मितम् ।
सरः सुरम्यं तीर्थानि तत्र ते निदधुस्तथा ॥ ४ ॥
गंगादिकानि तीर्थानि यानिप्रोचुर्दिवौकसः ।
इदं यावत्सरस्तावत्सर्वैरत्रसमुष्यताम् ॥ ५ ॥
एवमस्त्विवति तान्युचुः प्रीत्यर्थं शरजन्मनः ।
ततो ब्रह्मा स्वयं तत्र रौद्रैर्मन्त्रैर्हुताशनम् ॥
गाधिपुत्रादिभिर्विप्रैस्तर्पयामास संयुतः ॥६॥
ततो वैशाखमासस्य चतुर्द्दश्यां शुभे दिने ।
प्रतिष्ठां चक्रिरे लिङ्गं चिरंचिप्रमुखाद्विजाः ॥ ७ ॥
जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ।
ततः स्कन्दः प्रीतियुक्तः स्नात्वासरसिशोभने ॥ ८ ॥
सर्वतीर्थोदकैः स्नाप्य तल्लिङ्गं भक्तिसंयुक्तः ।



विविधैः पूजयामासपुष्पैर्मन्त्रैश्च पञ्चभिः ॥ ९ ॥
पूजाकाले स्वयं तत्र लिङ्ग मध्ये स्थितो हरः ।
जङ्गमाजङ्गमैः सार्धं स्वयं जग्राह पूजनम् ॥१०॥
ततस्तं पूजयन्प्राह स्कन्दो भक्तिपरिप्लुतः ।
केन केनोपहारेण त्वयिदत्तेन किम्फलम् ॥ ११ ॥

### श्री महादेव उवाच

मम यः स्थापयेल्लिङ्गंशुभं सद्म च कारयेत् ।
मल्लोके वसतेऽसौ च यावच्चन्द्रदिवाकरौ ॥ १२ ॥
मम सद्म सुधाशुभ्रंयावत्संख्यं करोति यः ।
तावन्त्येवच जन्मानियशसाऽसौविराजते ॥ १३ ॥
ध्वजभूतो ध्वजं दत्वा विपापः स्यात्पताकया ।
विधाय चित्रविन्यासगन्धर्वैः सहमोदते ॥१४॥
रजः शंसोधननं कृत्वा नरो रोगैः प्रमुच्यते ।
प्राप्नोति देहं हार्दं च सुरसद्मानुलेपनात् ॥ १५ ॥
पुष्पक्षीरादिभिर्दत्त स्तिलाम्भोऽक्षतदर्भकैः ।
शम्भोः शिरसि दत्त्वार्घ्यं दिवि वर्षायुतंवसेत् ॥ १६ ॥
घृतेन हतपापः स्यान्मधुना सुभगो भवेत् ।
चिरोगो दधिदुग्धाभ्यां लिङ्गं संस्नाप्य जायते ॥१७॥
पानीयदधिदुग्धाद्यैः क्रमाद्दशगुणंफलम् ।
मासं संस्नाप्य वै भक्त्यापिष्टाद्यैश्चविरूक्षयेत् ॥ १८ ॥
कपिला पञ्चगव्येन सुरसिन्धुजलेन वा ।
मां च संस्नाप्य चाभ्यर्च्यमल्लोकमधिगच्छति ॥ १९ ॥
कुशोदकाद्गन्धजलं तस्मात्तीर्थोदकं वरम् ।
तीर्थेभ्यश्च जलं दर्शे महीसागरसम्भवम् ॥ २० ॥

